नमो नमो निम्मल दंसणस्स

पंचम गणधर श्री सुधर्मास्वामिने नमः

# ६ ज्ञाताधर्मकथाङ्गम्

## सटीकं

## (षष्ठं अङ्गसूत्रम्)

(मूलसूत्रम् + अभयदेवसूरिविरचिता वृत्तिः)

## 卐 प्रथमः श्रुतस्कन्धः 卐

॥१॥ नत्वा श्रीमन्महावीरं, प्रायोऽन्यग्रन्थवीक्षितः ।
ज्ञाताधर्मकथाङ्गस्यानुयोगः कश्चिदुच्यते ॥

तत्र च फलमङ्गलादिचर्चः स्थानान्तरादवसेयः, केवलमनुयोगद्वारविशेषस्योपक्रमस्य प्रतिभेदरूपप्रक्रान्तशास्त्र वीरजिनवरेन्द्रापेक्षयाऽर्थतः आत्मागमत्वं तच्छिष्यं तु पञ्चमगणधरं सुधर्मस्वा-मिनमाश्रित्यानन्तरागमत्वं तच्छिष्यं च जम्बूस्वामिनमपेक्ष्य परम्परागमतां प्रतिपिपादयिषुः अथवा अनुगमाख्यस्य तृतीयस्यानुयोगद्वारस्य भेदभूताया उपोद्घातनिर्युक्तेः प्रतिभेदभूतनिर्गम-द्वारस्वभावं प्रस्तुतग्रन्थस्यार्थतो महावीरनिर्गतत्वमभिधित्सुः सूत्रकारः– 'तेणं कालेण' मित्यादिकमुपोद्घातग्रन्थं तावदादावाह–

### (अध्ययनं – १ – उत्क्षिप्तः)

**मू. (१)** *ॐ नमः सर्वज्ञाय। ते णं काले णं ते णं समए णं चंपानामं नयरी होत्था वण्णओ*

**वृ.** तत्र चोऽयं णंशब्दः स वाक्यालङ्कारार्थः, ते इत्यत्र च य एकारः स प्राकृतशैलीप्रभवो यथा 'करेमि भंते!' इत्यादिषु, ततोऽयं वाक्यार्थो जातः–तस्मिन् काले तस्मिन् समये यस्मिन्नसौ नगरी बभूवेति, अधिकरणे चेयं सप्तमी, अथ कालसमययोः कः प्रति विशेषः ?, उच्यते, काल इति सामान्यकालः अवसर्प्पिण्याश्चतुर्थविभागलक्षणः समयस्तु तद्विशेषो यत्र सा नगरी स राजा सुधर्म्मस्वामी च बभूव, अथवा तृतीयैवेयं, ततस्तेन कालेन–अवसर्पिणीचतुर्थारकलक्षणेन हेतुभूतेन तेन समयेन–तद्विशेषभूतेन हेतुना

'चंपा नाम नगरी होत्थ' त्ति अभवत् आसीदित्यर्थः, ननु चेदानीमपि साऽस्ति किं पुनरधि-कृतग्रन्थकरणकाले ?, तत्कथमुक्तमासीदिति ?, उच्यते, अवसर्प्पिणीत्वात् कालस्य वर्णकग्रन्थ-वर्णितविभूतियुक्ता तदानीमासीद् इदानीं नास्तीति 'वण्णओ' त्ति चम्पानगर्या वर्णकग्रन्थोऽत्रावसरे वाच्यः, स चायं–'रिद्धत्थिमियसमिद्धा' ऋद्धा–भवनादिभिर्वृद्धिमुपगता स्तिमिता–भयवर्जितत्वेन स्थिरा समृद्धाधनधान्यादियुक्ता ततः पदत्रयस्य कर्मधारयः 'पमुइयजणजाणवया' प्रमुदिताः प्रमोदकारणवस्तूनां सद्भावाज्जनाः–नगरीवास्तव्यलोका जानपदाश्च–जनपदभवास्तत्रायाताः सन्तो

यस्यां सा प्रमुदितजनजानपदा 'आइण्णजणमणुस्सा' मनुष्यजनेनाकीर्णा–संकीर्णा, मनुष्यजनाकीर्णेति वाच्ये राजदन्तादिदर्शनादाकीर्णनमनुष्येत्युक्तं,

'हलसयसहस्ससंकिट्ठवियट्ठलट्ठपन्नत्तसेउसीमा' हलानां–लाङ्गलानां शतैः सहस्रैश्च शतसहस्रैर्वा–लक्षैः संकृष्टा–विलिखिता विकृष्टं–दूरं यावदविकृष्टा वा–आसन्ना लष्टा–मनोज्ञा कर्षकाभिमतफलसाधनसमर्थत्वात् 'पन्नत्ते'ति योग्या कृता बीजवपनस्य सेतुसीमामार्गसीमा यस्याः सा तथा, अथवा संकृष्टादिविशेषणानि सेतूनि–कुल्याजलसेक्यक्षेत्राणि सीमासु यस्याः सा तथा, अनेन तज्जनपदस्य लोकबाहुल्यं क्षेत्रबाहुल्यं चोक्तं,–

'कुक्कुडसंडेयगामपउरा' कुक्कुटाः–ताम्रचूडा षाण्ढेयाः–षण्ढपुत्रकाः षण्ढा एव तेषां ग्रामाः–समूहास्ते प्रचुराः–प्रभूता यस्यां सा तथा, अनेन लोकप्रमुदितत्वं व्यक्तीकृतं, प्रमुदितो हि लोकः क्रीडार्थं कुक्कुटान् पोषयति षण्ढांश्च करोतीति, 'उच्छुजवसालिकलिया' अनेन च जनप्रमोदकारणमुक्तं, नह्येवंप्रकारवस्त्वभावेन प्रमोदो जनस्य स्यादिति, 'गोमहिसगवेलगप्पभूया' गवादयः प्रभूताः–प्रचुरा यस्यामिति वाक्यं गवेलका–उरभ्राः,–

'आगारवंतचेइयजुवइविविहसंनिविट्ठबहुला' आकारवन्ति–सुन्दराकाराणि यानि चैत्यानि–देवतायतनानि युवतीनां च–तरुणीनां पण्यतरुणीनामिति हृदयं यानि विविधानि संनिविष्टानि–संनिवेशनानि पाटकास्तानि बहुलानिबहूनि यस्यां सा तथा 'उक्कोडियगायगंठिभेयभडतक्करखंडरक्खरहिया' उक्कोडा उत्कोटा–लञ्चेत्यर्थः तया ये व्यवहरन्ति ते उत्कोटिकाः गात्रान्–मनुष्यशरीरावयवविशेषान् कट्यादेः सकाशाद्ग्रन्थिकार्षापणादिपोट्टलिकां भिन्दन्ति–आच्छिन्दन्तीति गात्रग्रन्थिभेदा भटाः–चारभट्बलात्कारप्रवृत्तयः तस्कराः–तदेव–चौर्यं कुर्वन्तीत्येवंशीलास्तस्कराः खण्डरक्षा–दण्डपाशिकाः शुल्कपाला वा एभी रहिता या सा तथा, अनेन तत्रोपद्रवकारिणामभावमाह, 'खेमा' अशिवाभावात् 'निरुवद्दुवा' निरुपद्रुता अविद्यमानराजादिकृतोपद्रवेत्यर्थः, 'सुभिक्खा' सुष्ठु–मनोज्ञा प्रचुरा भिक्षा भिक्षुकाणां यस्यां सा सुभिक्षा, अत एव पाखण्डिकानां गृहस्थानां च 'वीसत्थसुहावासा' विश्वस्तानां निर्भयानामनुत्सुकानां वा सुखः–सुखस्वरूपः शुभो वा आवासो यस्यां सा तथा, 'अनेगकोडीकोडुंबियाइण्णनिव्वुयसुहा' अनेकाः कोट्यो द्रव्यसंख्यायां स्वरूपपरिमाणे वा येषां ते अनेककोट्यः तैः कौटुम्बिकैः–कुटुम्बिभिश्चाकीर्णा संकुला या सा तथा सा चासौ निर्वृता च–संतुष्टजनयोगात् संतोषवतीति कर्मधारयोऽत एव सा चासौ सुखा च शुभा च चेति कर्मधारयः,

'नडनट्टगजल्लमुट्ठियवेलंगबगकहकपवकलासकआइक्खयलंखमंखतूणइल्लतुंबवीणियअनेगतालाचराणुचरिया' नटा–नाटकानां नाटयितारो नर्त्तका–ये नृत्यन्ति अंकोल्ला इत्येके जल्ला–वरत्राखेलकाः राज्ञः स्तोत्रपाठका इत्यन्ये मल्लाः–प्रतीताः मौष्टिका–मल्ला एव ये मुष्टिभिः प्रहरन्ति विडम्बका–विदूषकाः कथकाः–परतीताः–प्लवका–ये उत्प्लवन्ते नद्यादिकं वा तरन्ति लासका ये रासकान् गायन्ति जयशब्दप्रयोक्तारो वा भाण्डा इत्यर्थः आख्यायिका–ये शुभाशुभमाख्यान्ति लङ्खा–महावंशाग्रखेलका मङ्खाः–चित्रफलकहस्ता भिक्षाकाः तूणइल्ला–तूणाभिधानवाद्यविशेषवन्तः तुम्बवीणिका–वीणावादका अनेके च ये तालाचराः–तालादानेन प्रेक्षाकारिणस्तैरनुचरिता–आसेविता या सा तथा, 'आरामुज्जाणअगडतलायदीहियवप्पिणगुणोववेया'

आरमन्ति येषु माधवीलतागृहादिषु दम्पत्यादीनि ते आरामा उद्यानानि—पुष्पादिमद्वृक्षसंकुलान्युत्सवादौ बहुजनभोग्यानि, 'अगड' त्ति अवटाः—कूपास्तडागानि प्रतीतानि दीर्घिकाः—सारण्यः,

'वप्पिण' त्ति केदाराः एतेषां ये गुणा—रम्यतादयस्तैरुपपेता—युक्ता या सा तथा, उप अप इत इत्येतस्य शब्दत्रस्य स्थाने शकन्ध्वादिदर्शनादकारलोपे उपपेतेति भवतीति, 'उब्बिद्धविपुलगंभीरखायफलिहा' उद्विद्धं—उण्डं विपुलं—विस्तीर्णं गम्भीरम्—अलब्धमध्यं खातम्—उपरि विस्तीर्णं अधः संकटं परिखा च—अध उपरि च समखातरूपा यस्याः सा तथा, 'चक्कगयमुसुंढिओरोहसयग्घिजमलकवाडघणदुप्पवेसा' चक्राणि—अरघट्टयन्त्रिकाचक्राणि गदाः—प्रहरणविशेषाः, मुसुण्ढ्योऽप्येवं, अवरोधः—प्रतोलीद्वारेष्ववान्तरप्राकारः संभाव्यते, शतघ्न्यो—महायष्ट्यो महाशिलामय्यः याः पातिताः शतानि पुरुषाणां घ्नन्ति यमलानि—समसंस्थितद्वयरूपाणि यानि कपाटानि घनानि च—निश्छिद्राणि तैर्दुष्प्रवेशा या सा तथा, 'धनुकुडिलवंकपागारपरिखित्ता' धनुः—कुटिलंकुटिलधनुः, ततोऽपि वक्रेण प्राकारेण परिक्षिप्ता या सा तथा, 'कविसीसयवट्टरइयसंठियविरायमाणा' कपिशीर्षकैर्वृत्तरचितैः—वर्तुलकृतैः संस्थितैः विशिष्टसंस्थानवद्भिर्विराजमाना शोभमाना या सा तथा 'अट्टालयचरियदारगो-पुरतोरणउन्नयसुविभत्तरायमग्गा' अट्टालकाः—प्राकारोपरिवर्त्याश्रयविशेषाः चरिका— अष्टहस्तप्रमाणो नगरप्राकारान्तरालमार्गः द्वाराणि भवनदेवकुलादीनां गोपुराणि—प्राकारद्वाराणि तोरणानि—प्रतीतानि उन्नतानि—गुणवन्ति उच्चानि च यस्यां सा तथा, सुविभक्ता विविक्ता राजमार्गा यस्यां सा तथा ततः पदद्वयस्य कर्मधारयः,

'छेयायरियरइयदढफलिहइंदकीला' छेकेन—निपुणेनाचार्येणशिल्पिना रचितो दृढो—बलवान् परिघः—अर्गला इन्द्रकीलश्च—गोपुरावयवविशेषो यस्यां सा तथा 'विवणिवणिछेत्तसिप्पियाइण्णनिव्वुयसुहा' विपणीनां—वणिक्पथानां हट्टमार्गाणां वणिजां च—वाणिजकानां क्षेत्रं—स्थानं या सा तथा शिल्पिभिः—कुम्भकारादिभिराकीर्णा सुनिर्वृतैः सुखैश्च—सुखिभिर्या राजदन्तादिदर्शनात् सा तथा 'सिंघाडगतिगचउक्कचच्चरपणियावणविविहवत्थुपरिमंडिया' शृङ्गाटकं—त्रिकोणं स्थानं त्रिकं—यत्र रथ्यात्रयं मिलति चतुष्कं—रथ्याचतुष्कमीलकः चत्वरं—बहुरथ्यापातस्थानं पणितानि—भाण्डानि तत्प्रधाना आपणा—हट्टाः विविधवस्तूनि—अनेकविधद्रव्याणि एभिः परिमण्डिता या सा तथा

'सुरम्मा' अतिरमणीया 'नरवइपविइन्नमहिवइपहा' नरपतिना—राज्ञा प्रविकीर्णो—गमनागमनाभ्यां व्याप्तः महीपतिपथो—राजमार्गो यस्यां सा तथा, अथवा नरपतिना प्रविकीर्णा—विक्षिप्ता निरस्ता शेषमहीपतीनां प्रभा यस्यां सा तथा, 'अनेगवरतुरगमत्तकुंजररहपहकरसीयसंदमाणीआइन्नजाणजुग्गा' अनेकैर्वरतुरगैर्मत्तकुञ्जरैः 'रहपहयर' त्ति रथनिकरैः शिबिकाभिः स्यन्दमानाभिराकीर्णा—व्याप्ता यानैर्युग्यैश्च या सा तथा, तत्र शिबिकाः—कूटाकारेण छादिता जम्पानविशेषा स्यन्दमानिकाः—पुरुषप्रमाणजम्पानविशेषाः यानानि—शकटादीनि युग्यानि—गोल्लविषयप्रसिद्धानि द्विहस्तप्रमाणानि वेदिकोपशोभितानि जम्पानान्येवेति, 'विमलउलनवनलिणिसोभियजला' विमुकुलाभिः—विकसितकमलाभिर्नवाभिर्नलिनीभिः—पद्मिनीभिः शोभितानि जलानि यस्यां सा तथा,

'पंडुरवरभवणसन्निमहिया' पाण्डुरैः—सुधाधवलैर्वरभवनैः—प्रासादैः सम्यक् नितरां महितेव महिता पूजिता या सा तथा, 'उत्ताणनयणपेच्छणिज्जा' सौभाग्यातिशयादुत्तानैः—अनिमि-

र्यैर्नयनैः–लोचनैः प्रेक्षणीया या सा तथा 'पासाईया' चित्तप्रसत्तिकारिणी 'दरिसणिज्जा' यां पश्यच्चक्षुः श्रमं न गच्छति, 'अभिरूवा' मनोज्ञरूपा 'पडिरूवा' प्रतिरूपा द्रष्टारं द्रष्टारं प्रति रूपं यस्याः सा तथेति।

**मू. (२)** *तीसे णं चंपाए नयरीए बहिया उत्तरपुरच्छिमे दिसीभाए पुन्नभद्दे नामं चेइए होत्था। वण्णओ*

**वृ.** तस्या णमित्यलङ्कारे चम्पाया नगर्या 'उत्तरपुरत्तिमे'त्ति उत्तरपौरस्त्ये उत्तरपूर्वायामित्यर्थः 'दिसीभाए'त्ति दिग्भागे पूर्णभद्रं नाम चैत्यं–व्यन्तरायतनं, 'वन्नओ'त्ति चैत्यवर्णो वाच्यः,स चायं–'चिराइए पुव्वपुरिसपन्नत्ते' चिरः–चिरकाल आदिः–निवेशो यस्य तच्चिरादिकं, अत एव पूर्वपुरुषैः–अतीतनरैः प्रज्ञप्तं–उपादेयतया प्रकाशितं पूर्वपुरुषप्रज्ञप्तं 'पुराणे'त्ति चिरादिकत्वात् पुरातनं 'सद्दिए' शब्दः–प्रसिद्धिः स संजातो यस्य तच्छब्दितं 'वित्तए' वित्तं–द्रव्यं तदस्ति यस्य तद्वित्तिकं वृत्तिंवा आश्रितलोकानां ददाति यतद्वृ त्तिदं 'नाए' न्यायनिर्णायकत्वात् न्यायः ज्ञातं वा–ज्ञातसामर्थ्यमनुभूततत्प्रसादेन लोकेनेति,

'सच्छत्ते सज्झए सघंटे सपडागाइपडागमंडिए' सह पताकया वर्तत इति सपताकं एकां पताकामतिक्रम्य या पताका सातिपताका तया मण्डितं यत्तत्तथा तच्च तच्चेति कर्मधारयः, 'सलोमहत्थे' लोममयप्रमार्जनकयुक्तं 'कयवेयय(ए' कृतं वितर्द्धकं–रचितवेदिकं 'लाउल्लोइयमहिए' लाइयं यद्भमेश्छगणादिनोपलेपनं उल्लोइयं–कुड्यमालानां सेटिकादिभिः संमृष्टीकरणं ततस्ताभ्यां महितमिव महितं–पूजितं यत्तत्तथा, 'गोसीससरसरत्तचंदणदद्दरदिन्नपंचंगुलितले' गोशीर्षेण–सरसरक्तचन्दनेन च दर्दरेण–बहलेन चपेटाकारेण वा दत्ताः पंचाङ्गुलास्तला–हस्तकाः यत्र तत्तथा, 'उवचियचंदण- कलसे' उपचिता–निवेशिताः चन्दनकलशा–मङ्गल्यघटा यत्र तत्तथा,

'चंदनघडसुकयतोरणपडिदुवारदेसभागे' चन्दनघटाश्च सुष्ठु कृतास्तोरणानि च द्वारदेशभागं प्रति यस्मिंस्तच्चन्दनघटसुकृततोरणप्रतिद्वारदेशभागं, देशभागाश्च देशा एव, 'आसत्तोसत्तविपुल-वट्टवग्घारियमल्लदामकलावे' आसक्तो–भूमौ संबद्धः उत्सक्त–उपरि संबद्धः विपुलो–विस्तीर्णः वृत्तो–वर्तुलः 'वग्घारिय' त्ति प्रलम्बमानः माल्यदामकलापः–पुष्पमालासमूहो यत्र तत्तथेति 'पंचवण्णसुरभिमुक्कपुप्फपुंजोवयारकलिए' पंचवर्णेन सुरभिणा मुक्तेन–क्षिप्तेन पुष्पपुञ्जल-क्षणेनोपचारेण–पूजया कलितं यत्तत्तथा 'कालागरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामे' कालागरुप्रभृतीनां धूपानां यो मघमघायमानो गन्ध उद्धूत–उद्धूतस्तेनाभिरामं यत्तत्तथा, तत्र कुंदुरुक्कं–चीडा तुरुक्कंसिल्हकं 'सुगंधवरगंधगंधिए' सद्गन्धा ये वरगन्धा–वासास्तेषां गन्धो यत्रास्ति तत्तथा 'गंधवट्टिभूए' सौरभ्यातिशयात् गन्धद्रव्यगुटिकाकल्पमित्यर्थः

'नडनट्टकजल्लमल्लमुट्ठियवेलंबगपवककहकलासकआइक्खयलंखमंखतूणइ-ल्लतुंबवीणियभुयगमागहपरिगए' पर्ववन्नवरं भुजगा–भोगिन इत्यर्थः भोजका वा तदर्चका मागधा–भट्टाः 'बहुजणजाणवयस्स विस्सुयकित्तिए' बहोर्जनस्य पौरस्य जानपदस्य च–जन-पदभवलोकस्य विश्रुतकीर्त्तिकं–प्रतीतख्यातिकं, 'बहुजणस्स आहुस्स आहुणिज्जे' आहोतुः–दातुः आहवनीयं–संप्रदानभूतं 'पाहुणिज्जे' प्रकर्षेण आहवनीयमिति गमनिका 'अच्चणिज्जे' चन्दन-गन्धादिभिः 'वंदणिज्जे' स्तुतिभिः 'पूयणिज्जे' पुष्पैः 'सक्कारणिज्जे' वस्त्रैः 'सम्माननिज्जे' बहुमानविषय-

तया 'कल्लाणं मंगलं देवयं चेइयं विणएणं पज्जुवासणिज्जे' कल्याणमित्यादिधिया विनयेन पर्युपासनीयं 'दिव्वे' दिव्यं प्रधानं 'सच्चे' सत्यं सत्यादेशत्वात् 'सच्चोवाए' सत्यवपातं 'सत्यसेवं' सेवायाः सफलीकरणात् 'सन्निहियपाडिहेरे' विहितदेवताप्रातिहार्यं 'जागसहस्स भागपडिच्छए' यागाः—पूजाविशेषा ब्राह्मणप्रसिद्धअधास्तल्लक्षणां भागम्—अंशं प्रतीच्छति आभाव्यत्वात् यत्ततथा 'बहुजणो अच्चेइ आगम्म पुन्नभद्दं चेइअं।

से णं पुण्णभद्दे चेइए एक्केणं महया वनसंडेण सव्वओ समंता संपरिखित्ते' सर्वतः—सर्वदिक्षु समन्तात्—विदिक्षु च 'से णं वनसंडे किण्हे किण्होभासे' कृष्णावभासः—कृष्णप्रभः कृष्ण एव वाऽवभासत इति कृष्णावभासः, 'नीले नीलोभासे' प्रदेशान्तरे 'हरिए हरिओभासे' प्रदेशान्तर एव, तत्र नीलो मयूरगलवत् हरितस्तु शुकपिच्छवत्, हरितालाभ इति वृद्धाः, 'सीए सीओभासे' शीतः स्पर्शापेक्षया वल्ल्याद्याक्रान्तत्वादिति वृद्धाः, 'निद्धे निद्धोभासे' स्निग्धे न तु रूक्षः, 'तिव्वे तिव्वोभासे' तीव्रो वर्णादिगुणप्रकर्षवान्, 'किण्हे किण्हचछाए' इह कृष्णशब्दः कृष्णच्छाय इत्यस्य विशेषणमिति न पुनरुक्तता, तथाहि—कृष्णः सन् कृष्णच्छायः, छाया चादित्यावरणजन्यो वस्तुविशेषः,—

—एवं 'नीले नीलच्छाए हरिए हरियच्छाए सीए सीयच्छाए निद्धे निद्धच्छाए तिव्वे तिव्वच्छाए घणकडियकडिच्छाए' अन्योऽन्यं शाखानुप्रवेशाद्बहलनिरन्तरच्छायः 'रम्मे महामेहनिकुरंबभूए' महामेघवृन्दकल्पे इत्यर्थः, 'ते णं पायवा मूलमंतो कंदमंतो' कन्दो—मूलानामुपरि 'खंधमंतो' स्कन्धः—स्थुडं 'तयामंतो' सालमंतो शाला—शाखा 'पवालमंतो' प्रवालः—पल्लवाङ्कुरः, 'पत्तमंतो पुप्फमंतो फलमंतो बीयमंतो' 'अणुपुव्वसुजायरुइलवट्टभावपरिणया' आनुपूर्व्येण—मूलादि- परिपाट्या सुष्ठु जाता रुचिराः वृत्तभावं च परिणता ये ते तथा 'एक्कखंधा अणेगसाला अणेगसाहप्प- साहविडिमा' अनेकशाखाप्रशाखो विटपस्तन्मध्यभागो वृक्षविस्तारो येषां ते तथा 'अनेगणरवाम- सुप्पसारिय- अगेज्झधणविपुलवट्टखंधा' अनेकाभिर्नरवामाभिः सुप्रसारिताभिरग्राह्यो घनो—निबिडो विपुलो—विस्तीर्णो वृत्तश्च स्कन्धो येषां ते तथा 'अच्छिद्दपत्ता' नीरन्ध्रपर्णा 'अविरलपत्ता' निरन्तरदलाः 'अवाईणपत्ता' अवाचीनपत्राः—अधोमुखपलाशाः अवातीनपत्रा वा—अवातोपहतवर्हाः 'अणईइ- पत्ता' ईतिविरहितच्छदाः, 'निद्धुयजरठपंडुरयपत्ता' अपगतपुराणपाण्डुरपत्राः,

'नवहरियभिसंतपत्तभारंधकारगंभीरदरिसणिज्जा' नवेन हरितेन 'भिसन्त'त्ति दीप्यमानेन पत्रभरेण—दलसंचयेनान्धाकारा—अन्धकारवन्तः अत एव गम्भीराश्च दृश्यन्ते ये ये तथा 'उवनिग्ग- यनवतरुणपत्तपल्लवकोमलउज्जलचलंतकिसलयसुकुमालपवालसोहियवरंकुरग्गसिहरा' उपनिर्गतैर्नवतरुणपत्रपल्लवैरिति—अभिनवपत्रगुच्छैः तथा कोमलोज्ज्वलैश्चलद्भिः किशलयैः—पत्रविशेषैस्तथा सुकुमालप्रावालैः शोभितानि वराङ्कुराण्यग्रहशिखराणि येषां ते तथा, इह चाङ्कुरप्रवा- लकिशलयपत्राणां अल्पबहुबहुतरादिकालकृतावस्थाविशेषाद् विशेषः संभाव्यत इति, 'निच्चं कुसुमिया निच्चं माइया' मयूरिताः 'निच्चं लवइया पल्लविताः 'निच्चं थवइया' स्तबकवन्तः 'निच्चं गुलइया' गुल्मवन्तः, 'निच्चं गोच्छिया' जातगुच्छाः, यद्यपि स्तबकगुच्छयोरविशेषो नामकोशेऽ- धीतस्तथाऽपीह विशेषो भावनीयः, 'निच्चं जमलिया' यमलतया समश्रेणितया व्यवस्तिताः,

'निच्चं जुयलिया' युगलतया स्थिताः 'निच्चं विणमिया' विशेषेण फलपुष्पभारेण नताः,

'निद्धंपणमिया' तथैव नन्नुमारब्धाः, 'निद्धं कुसुमियमाइयलवइयथवइयगुलइयगोच्छियजमलिय-जुवलियविणमियपणमियसुविभत्तपिंडिमंजरिवडेंसगधरा' केचित् कुसुमिताद्येकैकगुणयुक्ताः अपरे तु समस्तगुणयुक्तास्ततः कुसुमिताश्च ते इत्येवं कर्मधारयः, नवरं सुविभक्ता–विविक्ताः सुनिष्पन्नतया पिण्ड्यो–लुम्ब्यः मञ्जर्यश्च प्रतीतास्ता एवावतंसकाः–शेखरकास्तान् धारयन्ति ये ते तथा, 'सुयवरहिणमयणसालकोइलकोभंडकभिंगारककोमलक जीवंजीवकनंदीमुहकविलपिंग-लक्खगकारंडचक्कवायकलहंससारसअणेगसउणगणमिहुणविरइयसद्दुण्णइयमहुरसरनाइए' शुकादीनां सारसान्तानां अनेकेषां शकुनगणानां मिथुनैर्विरचितं शब्दोन्नतिकं च–उन्नतशब्दकं मधुरस्वरं च नादितं–लपितं–यस्मिन् स तथा,–

वनखण्ड इति प्रकृतं 'सुरम्मे संपिंडियदरियभमरमहुकरिपहकरपरिलिंतमत्तछप्पय-कुसुमासवलोलमहुरगुमगुमिंतगुंजंतदेसभागे' संपिण्डिता दप्तभ्रमरमधुरकरीणां वनसत्कानामेव 'पहकर'त्ति निकरा यत्र स ताथा तथा परिलीयमाना–अन्यत आगत्य लयं यान्तो मत्तषट्पदाः कुसुमासवलोलाः–किञ्जल्कलम्पटाः मधुरं गुमगुमायमानाः गुञ्जन्तश्च–शब्दविशषं विदधानाः देशभागेषु यस्य स तथा, ततः कर्मधारयः, 'अब्भिंतरपुप्फफला बाहिरपत्तुच्छन्ना पत्तेहि य पुप्फेहि य उच्छन्न पलिच्छन्ना' अत्यंतमाच्छादिता इत्यर्थः, एतानि पुनर्वृक्षाणां विशेषणानि 'साउफले मिट्ठफले'इत्यतो वनषण्डस्य भूयो विशषणानि 'निरोयए' रोगवर्जितः, 'नाणाविहगुच्छगुम्ममंडव-गसोहिए विचित्तसुहकेउभूए' विचित्रान्–शुभान् केतून्–ध्वजान् भूतः–प्राप्तः,

'वाविपुक्खरिणीदीहियासुनिवेसियरम्मजालहरए' वापीषु–चतुरस्रासु पुष्करिणीषु–वृत्तासु पुष्करवतीषु वा दीर्घिकासु–ऋजुसारणीषु सुष्ठु निवेशितानि रम्याणि जालगृहकाणि यत्र स तथा 'पिंडिमनीहारिमसुगंधिसुहसुरभिमणहरं महया गंधद्धणिं' मुयंता पिंडिमनिर्हारिमां पुद्गलसमूहरूपां दूरदेशगामिनीं च सद्गन्धिकां शुभशुरभिभ्यो गन्धान्तरेभ्यः सकाशान्मनोहरा या सा तथा तां च महता मोचनप्रकारेण विभक्तिव्यत्ययात् महतीं वा गन्ध एव घ्राणहेतुत्वात्–तृप्तिका- रित्वाद्गन्ध-घ्राणिस्तां मुञ्चन्त इति वृक्षविशेषणमेवमितोऽन्यान्यपि 'नाणाविहगुच्छगुम्म- मंडवकधर-कसुहसेउकेउबहुला' नानाविधाः गुच्छा गुल्मानि मण्डपका गृहकाणि च येषां सन्ति ते तथा, तथा शुभाः सेतवो–मार्गा आलवालपाल्यो वा केतवश्च–ध्वजा–बहुला–बहवो येषां ते तथा, ततः कर्मधारयः, 'अणेगरहजाणजोग्गसिवियपविमोयणा' अनेकेषां रथादीनामधोऽ- तिविस्तीर्णत्वात् प्रविमोचनं येषु ते तथा 'सुरम्मा पासाईया दरिसणिज्जा अभिरूवा पडिरूवा।

तस्स णं वनसंडस्स बहुमज्झदेसभागे एत्थ णं महं एक्के असोगवरपायवे पन्नत्ते, कुसवि-कुसविसुद्धरुक्खमूले' कुशा–दर्भा विकुशा–वल्वजादयस्तैर्विशुद्धं–विरहितं वृक्षानुरूपं मूलं–समीपं यस्य स तथा, 'मूलमंते' इत्यादिविशेषणानि पूर्ववद्वाच्यानि यावत् 'पडिरूवे, से णं असोगवरपायवे अन्नेहिं बहूहिं तिलएहिं लउएहिं छत्तोएहिं सिरिसेहिं सत्तवण्णेहिं दहिवण्णेहिं लोद्धेहिं धवेहिं चंदणेहिं अज्जुणेहिं निंबेहिं कुडएहिं कलंबेहिं सव्वेहिं फणसेहिं दाडिमेहिं सालेहिं तालेहिं तमालेहिं पिएहिं पियंगूहिं पुरोवएहिं रायरुक्खेहिं नंदिरुक्खेहिं सव्वओ समंता संपरिक्खित्ते, ते णं तिलया लउया जाव नंदिरुक्खा कुसविकुसविसुद्धरुक्खमूला मूलमंतो' इत्यादि पूर्ववत्, यावत्, 'पडिरूवा,

ते णं तिलया जाव नंदिरुक्खा अन्नाहिं बहूहिं पउमलयाहिं नागलयाहिं असोगलयाहिं

चंपयलयाहिं चूयलयाहिं वणलयाहिं वासंतियलयाहिं कुंदलयाहिं सामलयाहिं सव्वओ समंता संपरिक्खित्ता, ताओ णं पउमलयाओ निच्चं कुसुमियाओ जाव पडिरूवाओ, तस्स णं असोगवर-पायवस्स हेट्ठा ईसिखंधसमल्लीणे' स्कन्धासन्नमित्यर्थः, 'एत्थ णं महं एक्के पुढविसिलापट्टए पन्नत्ते' 'एत्थ णं'तिशब्दोऽशोकवरपादपस्य यदधोऽत्रेत्येवं सम्बन्धनीयः,

'विक्खंभायामसुप्पमाणे किण्हे अंजणकवाणकुवलयहलहरकोसेज्जआगासकेसकज्जलं-गीखंजणसिंगभेयरिट्ठयजंबूफलअसणकसणबंधणनीलुप्पलपत्तनिकरअयसिकुसमप्पयासे' नील इत्यर्थः अञ्जनको-वनस्पतिः हलधरकोशेयं-बलदेववं कज्जलाङ्गी-कज्जलगृहं शृङ्गभेदो-महि-षादिविषाणच्छेदः रिष्ठकं-रत्नं असनको-बियकाभिधानो वनस्पतिः सनबन्धनं-सनपुष्पवृन्तं 'मरकतमसारकलित्तनयणकीयरासिवन्ने' मरकतं-रत्नं मसारो-मसृणीकारकः पाषाणविशेषः 'कडित्तं'त्ति कडित्रं कृत्तिविशेषः नयनकीका-नेत्रमध्यतारा तद्राशिवर्णः काल इत्यर्थः, 'निद्धघणे' स्निग्धघनः 'अट्ठसिरे' अष्टशिराः अष्टकोण इत्यर्थः, 'आयंसतलोवमे सुरम्मे ईहामिगउसभतुर-गनरमगरवालगकिन्नररुरुसरभचमरवणलयपउमलयभत्तिचित्ते' ईहामृगाः-वृकाः व्या-लकाः-श्वापदाः भुजगा वा 'आईणगरुयबूरणवणीयतूलफासे' आजिनकं-चर्म्ममय वस्त्रं रूतं प्रतीतं बूरो-वनस्पतिविशेषः तूलम्-अर्कतूलं 'सीहासणसंठिए पासाईए जाव पडिरूवे'त्ति।

मू. *(३) तत्थ णं चंपाए नयरीए कोणिको नामं राया होत्था वन्नओ।*

वृ. इह ग्रन्थे वाचनाद्वयमस्ति, तत्रैकां बृहत्तरां व्याख्यास्यामो, द्वितीया तु प्रायः सुगमैव, यच्च तत्र दुरवगमं तदितरव्याख्यानतोऽबोद्धव्यमिति।

'कूणिए नामं राय'त्ति कूणिकनामा श्रेणिकराजपुत्रो राजा 'होत्थ'त्ति अभवत्।

'वन्नओ'त्ति तद्वर्णको वाच्यः, स च 'महया हिमवंतमहंतमलयमंदरमहिंदसारे' इत्यादि 'पसंतडिंबडमरं रज्जं पसासेमाणे विहरति' इत्येतदन्तः, तत्र महाहिमवानिव महान् शेषराजापेक्षया तथा मलयः- पर्वतविशेषो मन्दरो-मेरुर्महेन्द्रः-शक्रादिदेवराजस्तद्वत्सारः-प्रधानो यः स तथा, तथा प्रशान्तानि डिम्बानि-विघ्नाः डमराणि-राजकुमारादिकृतविड्वरा यस्मिंस्तत्तथा 'प्रसाधयन्' पालयन् 'विहरति' आस्ते स्मेति, समग्रं पुनरग्रे व्याख्यास्यामः।

मू. *(४) ते णं काले णं ते णं समए णं समणस्स भगवओ महावीरस्स अंतेवासी अज्जसुहम्मे नामं थेरे जातिसंपन्ने कुलसंपण्णे बलरूवविनयनाणदंसणचरित्तलाघवसंपन्ने ओयंसी तेयंसी वच्चंसी जसंसी जियकोहे जियमाणे जियमाए जियलोहे जियइंदिए जियनिद्दे जियपरिसहे जीवियासमरणभयविप्पमुक्के तवप्पहाणे गुणप्पहाणे एवं करणचरणनिग्गहनिच्छयअज्जव-मद्दवलाघवखंतिगुत्तिमुत्ति १० विज्जामंतबंभवयनयनियमसच्चसोयणाणदंसण २० चारित्त०*

*ओराले घोरे घोरव्वए घोरतवस्सी घोरबंभचेरवासी उच्छूढशरीरे संखित्तविउलतेयलेस्से चोदसपुव्वी चउणाणोवगते पंचहिं अणगारसएहं सद्धिं संपरिवुडे पुव्वाणुपुव्विं चरमाणे गामाणुगामं दूतिज्जमाणे सुहंसुहेणं विहरमाणे जेणेव चंपा नयरी जेणेव पुण्णभद्दे चेतिए तेणामेव उवागच्छइ० त्ता अहापडिरूवं उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरति।*

वृ. 'थेरे'त्ति श्रुतादिभिर्वृद्धत्वात् स्थविरः, 'जातिसंपन्न' इति उत्तममातृकपक्षयुक्त इति प्रतिपत्तव्यमन्यथा मातृकपक्षसंपन्नत्वं पुरुषमात्रस्यापि स्यादिति नास्योत्कर्षः कश्चिदुक्तो भवेद्,

उत्कर्षमिधानार्थं चास्य विशेषणकलापोपादानं चिकीर्षितमिति, एवं कुलसंपन्नोऽपि, नवरं कुलं–पैतृकः पक्षः तथा बलं–संहननविशेषसमुत्थः प्राणः रूपम्–अनुत्तरसुररूपादनंतगुणं शरीरसौन्दर्यं विनयादीनि प्रतीतानि नवरं लाघवं–द्रव्यतोऽल्पोपधित्वं भावतो गौरवत्रयत्यागः एभिः संपन्नो यः स तथा, 'ओयंसि' त्ति ओजोमानसोऽवष्टम्भस्तद्वानोजस्वी तथा तेजस्वी तेजः–शरीरप्रभा तद्वांस्तेजस्वी वचो–वचनं सौभाग्याद्युपेतं यस्यास्ति स वचस्वी अथवा वर्चः–तेजः प्रभाव इत्यर्थस्त- द्वान् वर्चस्वयशस्वी–ख्यातिमान्, इह विशेषणचतुष्टयेऽपि अनुस्वारः प्राकृतत्वात्, जितक्रोध इत्यादि तु विशेषणसप्तकं प्रतीतं, नवरं क्रोधादिजय उदयप्राप्तक्रोधादिविफली- करणतोऽवसेयः, तथा जीवितस्य–प्राणधारणस्याशा–वाञ्छामरणाच्च यद्भयं ताभ्यां विप्रमुक्तः जीविताशामरणभयवि- प्रमुक्तस्तदुभयोपेक्षक इत्यर्थः, तथा तपसा प्रधान–उत्तमः शेषमुनिजना पेक्षया तपो वा प्रधानं यस्य स तपःप्रधानः, एवं गुणप्रधानोऽपि, नवरं गुणाः–संयमगुणाः, एतेन च विशेषणद्वयेन तपः संयमौ पूर्वबद्धाभिनवयोः कर्मणोर्निर्जरणानुपादानहेतू मोक्षसाधने मुमुक्षूणामुपादेयावुपदर्शितौ, गुणप्रधान्ये प्रपञ्चार्थमेवाह–

'एवं करणे' त्यादि, यथा गुणशब्देन प्रधानशब्दोत्तरपदेन तस्य विशेषणमुक्तमेवं करणा- दिभिरेकविंशत्या शब्दैरेकविंशतिविशेषणान्यध्येयानि, तद्यथा–करणप्रधानश्चरणप्रधानो यावच्चरित्रप्रधानः, तत्र करणं–पिण्डविशुद्ध्यादिः, यदाह–"पिंडविसोही समिई भावणे" त्यादि, चरणं–महाव्रतादि, आह च– 'वयसमणधम्मसंजमवेयावच्चं चे'त्यादि, निग्रहः–अनाचार- प्रवृत्ते- र्निषेधनं निश्चयः–तत्त्वानां निर्णयः, विहितानुष्ठानेषु वाऽवश्यंकरणाभ्युपगमः आर्जवं- माया- निग्रहो मार्दवं–माननिग्रहो लाघवं–क्रियासु दक्षत्वं क्षान्तिः–क्रोधनिग्रहः गुप्तिर्मनोगुप्त्यादिका, मुक्तिर्निर्लोभता, विद्याः–प्रज्ञप्त्यादिदेवताधिष्ठिता वर्णानुपूर्व्यः, मन्त्रा–हरिणेगमिष्यादिदेवता- धिष्ठितास्ता एव अथवा विद्याः ससाधनाः साधनरहिता मन्त्रा ब्रह्म–ब्रह्मचर्यं सर्वमेव वा कुशलानुष्ठानं वेदः–आगमो लौकिकलोकोत्तरकुप्रावचनिकभेदः नया–नैगमादयः सप्त प्रत्येकं शतविधाः नियमा–विचित्रा अभिग्रहविशेषाः सत्यं–वचनविशेषं शौचं–द्रव्यतो निर्लेपता भावतोऽनवद्यसमा- चारता ज्ञानं–मत्यादि दर्शनं–चक्षुर्दर्शनादि सम्यकत्वं वा चारित्रं–बाह्यं सदनुष्ठानं, यच्चेह करणचरणग्रहणेऽपि आर्जवादिग्रहणं तदार्जवादीनां प्राधान्यख्यापनार्थं,

ननु जितक्रोधत्वादीनां आर्जवादीनां च को विशेषः ?, उच्यते, जितक्रोधादिविशेषणेषु तदुदयविफलीकरणमुक्तं मार्दवप्रधानादिषु तु उदयनिरोधः, अथवा यत एव जितक्रोधादिरत एव क्षमादिप्रधान इत्येवं हेतुहेतुमद्भावात् विशेषः, तथा ज्ञानसंपन्न इत्यादौ ज्ञानादिमत्त्वमात्रमुक्तं ज्ञानप्रधान इत्यादौ तु तद्वतां मध्ये तस्य प्राधान्यमित्येवमन्यत्राप्यपौनरुक्त्यं भावनीयं, तथा 'ओराले' त्ति भीमो भयानकः, कथम् ? –अतिकष्टं तपः कुर्वन् पार्श्ववर्तिनामल्पसत्त्वानां भयानको भवति, अपरस्त्वाह 'उराले' त्ति उदारः–प्रधानः 'घोरि' त्ति घोरो निर्घृणः परिषहेन्द्रियकषायाख्यानां रिपूणां विनाशे कर्तव्ये,

अन्ये त्वात्मनिरपेक्षं घोरमाहुः, तथा 'घोरव्वए' त्ति घोराणि–अन्यैर्दुरनुचराणि व्रतानि– महाव्रतानि यस्य स तथा, घोरैस्तपोभिस्तपस्वी च, तथा घोरं च दब्रह्मचर्यं चाल्पसत्त्वैर्दुःखं यदनुचर्यते तस्मिन् घोरब्रह्मचर्ये वस्तुं शीलमस्येति घोरब्रह्मचर्यवासी 'उच्छूढशरीरे' 'उच्छूढं' ति उज्झितमि-

वोज्झितं शरीरं येन स तत्सत्कारं प्रति निःस्पृहत्वात्, तथा 'संखित्त' त्ति संक्षिप्ता शरीरान्तर्वर्त्तिनी विपुला अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्था तेजोलेश्या–विशिष्टतपोजन्यलब्धि विषय प्रभवा तेजोज्वाला यस्य स संक्षिप्तविपुलतेजोलेश्यः, तथा चतुर्दशपूर्वीति वेदप्रधान इत्येतस्यैव विशेषाभिधानं, चतुर्ज्ञानोपगतः केवलवर्जज्ञानयुक्त इत्यर्थः, अनेन च ज्ञानप्रधान इत्येतस्य विशेषोऽभिहितः, पञ्चभिरनगारशतैः–साधुशतैः 'सार्द्धं' सह समन्तात्परिकरित इत्यर्थः,

तथा 'पुव्वाणुपुव्वि' न्ति पूर्वानुपूर्व्या न पश्चानुपूर्व्या अनानुपूर्व्या वेत्यर्थः, करमेणेति हृदयं, 'चरन्' संचरन्, एतदेवाह 'गामाणुगामं दूइज्जमाणे' त्ति ग्रामश्चानुग्रामश्च विवक्षितग्रामानन्तरग्रामो ग्रामानुग्रामं तत् व्रवन्–गच्छन् एकस्माद्गामादनन्तरं ग्राममनुल्लङ्घयन्नित्यर्थः, अनेनाप्य-प्रतिबद्धविहारमाह, तत्राप्यौत्सुक्याभावमाह, तथा 'सुहंसुहेणं विहरमाणे' त्ति अत एव सुखंसुखेन-शरीरखेदाभावेन संयमबाधाऽभावेन च विहरन्–स्थानात् स्थानान्तरं गच्छन् ग्रामादिषु वा तिष्ठन् 'जेणेव' त्ति यस्मिन्नेव देशे चम्पा नगरी यस्मिन्नेव च प्रदेशे पूर्णभद्रं चैत्यं 'तेणामेवे' ति तस्मिन्नेव देशे उपागच्छति, क्वचिद्राजगृहे गुणसिलके इति दृश्यते, स चापपाठ इति मन्यते,

उपागत्य च यथाप्रतिरूपं–यथोचितं मुनिजनस्य अवग्रहम्–आवासस्थानं गृहं–अनुज्ञाप-नापूर्वकं गृहीत्वा संयमेन तपसा चात्मानं भावयन् विहरति–आस्ते स्म ।

मू. (५) *तएणं चंपानयरीए परिसा निग्गया कोणिओ निग्गओ धम्मो कहिओ परिसा जामेव दिसं पाउब्भूया तामेव दिसिं पडिगया। तेणं कालेणं तेणं समयेणं अज्जसुहम्मस्स अनगारस्स जेट्ठे अंतेवासी अज्जजंबू नामं अनगारे कासवगोत्तेणं सत्तुस्सेहे जाव अज्जसुहम्मस्स थेरस्स अदूरसामंते उड्ढंजाणू अहोसिरे झाणकोट्ठोवगते संजमेणं तवसा अप्पाणं भावेमाणे विहरति,*

*–तते णं से अज्जजंबूनामे जायसड्ढे जायसंसए जायकोउहल्ले संजातसड्ढे संजातसंसए संजायकोउहल्ले उप्पन्नसड्ढे उप्पन्नसंसए उप्पन्नकोउहल्ले समुप्पन्नसड्ढे समुप्पन्नसंसए समुप्पन्नकोउहल्ले उट्ठाए उट्ठेति उट्ठाए उट्ठित्ता जेणामेव अज्जसुहम्मे थेरे तेणामेव उवागच्छति २ अज्जसुहम्मे थेरे तिक्खुत्तो आयाहिणपयाहिणं करेइ २ वंदति नमंसति वंदित्ता नमंसित्ता अज्जसुहम्मस्स थेरस्स नच्चासन्ने नतिदूरे सुस्सूसमाणे नमंसमाणे अभिमुहं पंजलिउडे विनएणं पज्जुवासमाणे एवं वयासी–*

*जति णं भंते! समणेणं भगवया महावीरेणं आइगरेणं तित्थग० सयंसंबु० पुरिसु० पुरिससी० पुरिसव० पुरिसवरगं० लोगु० लोगनाहे० लोगहिएणं लोगप० लोगपज्जोय० अभयद० सरणद० चक्खुद० मग्गद० बोहिद० धम्मद० धम्मदे० धम्मना० धम्मसा० धम्मवरचा० अप्पडिह० दंसणध० वियट्टछ० जिणेणं जाणएणं तिन्नेणं तार० बुद्धेणं बोहएणं मुत्तेणं मोअगेणं सव्वन्नेणं सव्वद० सिवमयलमरुतमनंतमक्खयमव्वाबहमपुणरावित्तियं सासयं ठाणमुवगतेणं पंचमस्स अंगस्स अयमट्ठे पन्नत्ते,*

*छट्ठस्स णं अंगस्स णं भंते! नायाधम्मकहाणं के अट्ठे पं० ?, जंबूत्ति तए णं अज्जसुहम्मे थेरे अज्जजंबूनामं अनगारं एवं व०–एवं खलु जंबू समणेणं भगवता महावीरेणं जाव संपत्तेणं छट्ठस्स अंगस्स दो सुयक्खंधा पन्नता, तंजहा नायाणि य धम्मकहाओ य, जति णं भंते! समणेणं भगवता महावीरेणं जाव संपत्तेणं छट्ठस्स अंगस्स दो सुयखंधा पं० तं०–नायाणि य धम्मकहाओ य, पढमस्स णं भंते! सुयकखंधस्स समणेणं जाव संपत्तेणं नायाणं कति अज्झयणा पन्नत्ता ?,*

*एवं खलु जंबू ! समणेणं जाव संपत्तेणं नायाणं एगूणवीसं अज्झयणा पं०, तं०–*

वृ. 'तए णं'ति ततोऽनन्तरं णमित्यलंकारे चम्पाया नगर्याः परिषत्–कूणिकराजादिका निर्गता–निःसृता सुधर्मस्वामिवन्दनार्थं, "जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगए'ति यस्या दिशः सकाशात् प्रादुर्भूता–आविर्भूता आगता इत्यर्थः तामेव दिशं प्रतिगतेति।

तस्मिन् काले तस्मिन् समये आर्यसुधर्मणोऽन्तेवासी आर्यजम्बूनामनगारः काश्यपगोत्रेण 'सत्तुस्सेहे'त्ति सप्तहस्तोच्छ्रयो यावत्करणादिदं दृश्यं "समचउरससंठाणसंठिए वज्जरिसहनाराय-संघयणे कणगपुलगनिघसपम्हगोरे" कनकस्य–सुवर्णस्य 'पुलग'त्ति यः पुलको लवस्तस्य यो निकषः–कषपट्टे रेखालक्षणः तथा 'पम्ह'त्ति पद्मगर्भस्तद्वत् गौरो यः स तथा, वृद्धव्याख्या तु कनकस्य न लोहादेर्यः पुलकः–सारो वर्णातिशयः तत्प्रधानो यो निकषो–रेखा तस्य यत्पक्ष्मबहुलत्वं तद्वद्यो गौरः स कनकपुलकनिकषपक्ष्मगौरः,

तथा 'उग्गतवे' उग्रम्–अप्रधृष्यं तपोऽस्येतिकृत्वा, तथा 'तत्ततवे' तप्तं–तापितं तपो येन स तप्ततपाः, एवं तेन तत्तपस्तप्तं येन कर्म्माणि संताप्य तेन तपसा स्वात्मापि तपोरूपः संतापितो यतोऽन्यस्यास्पृश्यमिव जातमिति, तथा महातपाः–प्रशस्ततपा बृहत्तपा वा, तथा दीप्तं तपो यस्य स दीप्ततपाः, दीप्तं तु हुताशन इव ज्वलत्तेजः कर्म्मेन्धनदाहकत्वात्,

तथा "उराले घोरे घोरगुणे घोरतवस्सी घोरबंभचेरवासी उच्छूढसरीरे संखित्तविउलतेयलेसे" इति पूर्ववत्, एवंगुणविशिष्टो जम्बूस्वामी भगवान् आर्यसुधर्म्मणः स्थविरस्य 'अदूरसामंते'त्ति दूरं–विप्रकर्षः सामन्तं–समीपं उभयोरभावोऽदूरसामन्तं तस्मिन्नातिदूरे नातिसमीपे उचिते देशे स्थित इत्यर्थः, कथं ?–'उड्ढंजाणू' इत्यादि शुद्धपृथिव्यासनवर्जनात् औपग्रहिकनिषद्याभावाच्च उत्कटुकासनः सन्नुपदिश्यते ऊर्द्धजानुनी यस्य स ऊर्द्धजानुः 'अधःशिराः' अधोमुखो नोर्ध्वं तिर्यग् वा विक्षिप्तदृष्टिः किं तु नियतभूभागनियमितदृष्टिरिति भावना, 'झाणकोट्ठोवगए'त्ति ध्यानमेव कोष्ठो ध्यानकोष्ठस्तमुपगतो ध्यानकोष्ठोपगतः, यथा हि कोष्ठके धान्यं प्रक्षिप्तमविप्रकीर्णं भवत्येवं स भगवान् धर्मध्यानकोष्ठकमनुप्रविश्येन्द्रियमनांस्याधिकृत्य संवृतात्मा भवतीति भावः, संयमेन–संवरेण तपसा–ध्यानेनात्मानं भावयन्–वासयन् विहरति–तिष्ठति। 'तए णं से' इत्यादि, तत इत्यानन्तर्ये तस्मात् ध्यानादनन्तरं णमित्यलंकारे, 'स' इति पूर्वप्रस्तुतपरामर्शार्थः तस्य तु सामान्योक्तस्य विशेषावधारणार्थं आर्यजम्बूनामेति, स च उत्तिष्ठतीति सम्बन्धः,

किम्भूतः सन्नित्याह–'जायसड्ढे' इत्यादि, जाता–प्रवृत्ता श्रद्धा–इच्छाऽस्येति जातश्रद्धः, क्व ?–वक्ष्यमाणानां पदार्थानां तत्त्वपरिज्ञाने स तथा, जातः संशयोऽस्येति जातसंशयः, संशयस्त्वनि- र्द्धारितार्थं ज्ञानमुभयवस्त्वंशावलम्बितया प्रवृत्तं, स त्वेवं तस्य भगवतो जातः–यथा भगवता श्रीमन्महावीरवर्द्धमानस्वामिना त्रिभुवनभवनप्रकाशप्रदीपकल्पेन पञ्चमस्यांगस्य समस्त-वस्तुस्तोमव्यतिकरविर्भावनेनार्थोऽभिहित एवं षष्ठस्याप्युक्तोऽन्यथा वेति, तथा 'जातकुतूहलो' जातं कुतूहलं यस्य स तथा, जातौत्सुक्य इत्यर्थः, विश्वस्यापि विश्वव्यतिकरस्य पञ्चमाङ्गे प्रतिपादित-त्वात्षष्ठाङ्गस्य कोऽन्योऽर्थो भगवताऽभिहितो भविष्यतीति, संजातश्रद्ध इत्यादौ समुत्पन्नश्रद्ध इत्यादौ च संशब्दः प्रकर्षादिवचनः, तथा उत्पन्नश्रद्धः प्रागभूता उत्पन्ना श्रद्धा यस्येत्युत्पन्नश्रद्धः, अथोत्पन्नश्रद्धत्वस्य जातश्रद्धत्वस्य च कोऽर्थभेदो ?, न कश्चिदेव, किमर्थं तत्प्रयोगः ?, हेतुत्व-

प्रदर्शनार्थं, तथाहि—उत्पन्नश्रद्धत्वाज्जातश्रद्धः प्रवृत्तश्रद्ध इत्यर्थः,

अपरस्त्वाह—जाता श्रद्धा यस्य प्रष्टुं स जातश्रद्धः, कथं जातश्रद्धो ?, यस्माज्जातसंशयः, षष्ठाङ्गार्थः पञ्चमाङ्गार्थवत् प्रज्ञप्तः उतान्यथेति, कथं संशयोऽजनि ?, यस्मात् जातकुतूहलः, कीदृशो नाम षष्ठाङ्गस्यार्थो भविष्यति कथं च तमहमवभोत्स्ये ? इति तावदवग्रहः, एवं संजातोत्पन्नसमुत्पन्नश्रद्धादय ईहापायधारणाभेदेन वाच्या इति, 'उट्ठाए०'त्ति उत्थानमुत्या—ऊर्ध्व वर्त्तनं तया उत्थया उत्तिष्ठति उत्थाय च 'जेणे' त्यादि प्रकटं,

'अज्जसुहम्मेथेरे' इत्यत्र षष्ठ्यर्थे सप्तमीति 'तिखुत्तो'त्ति त्रिकृत्वस्त्रीन् वारान् 'आदक्षिण-प्रदक्षिणां' दक्षिणपार्श्वादारभ्य परिभ्रमणतो दक्षिणपार्श्वप्राप्तिरादक्षिणप्रदक्षिणा तां 'अज्जसुहम्मं थेरं' इत्यत्र पाठान्तरे आदक्षिणात्प्रदक्षिणो—दक्षिणपार्श्ववर्ती यः स तथा तं 'करोति' विदधाति वन्दते—वाचा स्तौति नमस्यति—कायेन प्रणमति नात्यासन्ने नातिदूरे उचिते देशे इत्यर्थः 'सुस्सूसमाणे'त्ति श्रोतु- मिच्छन् 'नमंसमाणे'त्ति नमस्यन् प्रणमन् अभिमुखः 'पंजलिउडे'त्ति कृतप्राञ्जलिः विनयेन प्रणमति—उक्तलक्षणेन 'पज्जुवासमाणे'त्ति पर्युपासनां विदधानः 'एव'मिति वक्ष्यमाणप्रकारं 'वदासि'त्ति अवादीत्,

यदवादीत् तदाह—'जई'त्यादि प्रकटं, नवरं यदि भदन्त ! श्रमणेन पञ्चमाङ्गस्यायमर्थः—अनन्तरोदितत्वेन प्रत्यक्षः प्रज्ञप्तस्ततः षष्ठाङ्गस्य कोऽर्थः प्रज्ञप्त इति प्रश्नवाक्यार्थः, अथोत्तरदानार्थं 'जम्बूनामे'त्ति हे जम्बू ! इति—एवंप्रकारेणामन्त्रणवचसाऽऽमन्त्र्य आर्यसुधर्मा स्थविरः आर्यजम्बूनामानं अनगारमेवमवादीत्—

'नायाणि'त्ति ज्ञातानि—उदाहरणानीति प्रथमः श्रुतस्कन्धः

'धम्मकहाओ'त्ति धर्म्मप्रधानाः कथाः धर्मकथा इति द्वितीयः

**मू. (६)** *उक्खित्तणाए १ संघाडे २, अंडे ३ कुम्मे य ४ सेलगे ५ ।*
*तुंबे य ६ रोहिणी ७ मल्ली ८, मायंदी ९ चंदिमा इय १० ॥*

**वृ.** 'उक्खित्ते'त्यादि श्लोकद्वयं सार्द्धं, तत्र मेघकुमारदजीवेन हस्तिभवे वर्तमानेन यः पाद उत्क्षिप्तस्तेनोत्क्षिप्तेनोपलक्षितं मेघकुमारचरितमुत्क्षिप्तमेवोच्यते, उत्क्षिप्तमेव ज्ञातम्—उदाहरणं विवक्षितार्थसाधनमुत्क्षिप्तज्ञातं, ज्ञातता चास्यैवं भावनीया—दयादिगुणवन्तः सहन्त एव देहकष्टं, उत्क्षिप्तैकपादो मेघकुमारजीवहस्तीवेति, एतदर्थाभिधायकं सूत्रमधीयमानत्वादध्ययनमुक्तमेवं सर्वत्र १ । तथा संघाटकः—श्रेष्ठिचौरयोरेकबन्धनबद्धत्वमिदमप्यभीष्टार्थज्ञापकत्वात् ज्ञातमेव, एवमौचित्येन सर्वत्र ज्ञातशब्दो योज्यः, यथा यथं च ज्ञातत्वं प्रत्यध्ययनं तदर्थावगमादवसेयमिति २ । नवरं अण्डकं—मयूराण्डं ३ । कूर्मश्च कच्छपः ४ । शैलको राजर्षिः ५ । तुम्बं च—अलाबुः ६ रोहिणी श्रेष्ठिवधूः ७ । मल्ली—एकोनविंशतितमजिनस्थानोत्पन्ना तीर्थकरी ८ । माकन्दी नाम वणिक् तत्पुत्रो माकन्दीशब्देनेह गृहीतः ९ । चंद्रमा इति च १० ।

**मू. (७)** *दावद्दवे ११ उदगणाए १२, मंडुक्के १३ तेयलीविय १४ ।*
*नंदीफले १५ अवरकंका १६, अतिन्ने १७ सुंसुमा इय १८ ॥*

**वृ.** 'दावद्दवे'त्ति समुद्रतटे वृक्षविशेषाः ११ । उदकं—नगरपरिखाजलं तदेव ज्ञातम्—उदाहरणं उदकज्ञातं १२ । मण्डूकः नन्दमणिकारश्रेष्ठिजीवः १३ । 'तेयली इय'त्ति तेतलि-

सुताभिधानोऽमात्य इति च १४। 'नंदीफल'त्ति नन्दिवृक्षाभिधानतरुफलानि १५। 'अवरकंका' धातकीखण्डभरतक्षेत्रराजधानी १६। 'आइण्णो' त्ति आकीर्णा—जात्याः समुद्रमध्यवर्त्तिनोऽश्वाः १७। 'सुंसुमा इय'त्ति सुंसुमाभिधाना श्रेष्ठिदुहिता १८।

मू. (८) *अवरे य पुंडरीयनायए १९ एगुणवीसतिमे।*

वृ.-अपरं च पुण्डरीकज्ञातमेकोनविंशतितममिति १९।

मू. (९) *जति णं भंते! समणेणं जाव संपत्तेणं नायाणं एगूणवीसा अज्झयणा पं०, तं०—उक्खित्तणाए जाव पुंडरीएत्ति य, पढमस्स णं भंते! अज्झयणाति के अट्ठे पन्नत्ते?*

*एवं खलु जंबू! तेणं कालेणं २ इहेव जंबूद्दीवे दीवे भारहे वासे दाहिणड्डभरहे रायगिहे नामं नयरे होत्था, वण्णओ, चेतिए वन्नओ, तत्थ णं रायगिहे नगरे सेणिए नामं राया होत्था महताहिमवंत० वन्नओ, तस्स णं सेणियस्स रन्नो नंदा नामं देवी होत्था सुकुमालपाणिपाया।*

वृ. यदि प्रथमश्रुतस्कन्धस्यैतान्यध्ययनानि भगवतोक्तानि ततः प्रथमाध्ययनस्य कोऽर्थो भगवता प्रज्ञप्त इति शास्त्रार्थप्रस्तावना॥ अथैवं पृष्टवन्तं जम्बूस्वामिनं प्रति सुधर्मस्वामी यथाश्रुतमर्थं वक्तुमुपक्रमते स्मेति। 'एव'मित्यादि सुगमं, नवरं 'एव'मिति वक्ष्यमाणप्रकारार्थः प्रज्ञप्त इति प्रक्रमः, खलु- वाक्यालङ्कारे जम्बूरिति शिष्यामन्त्रणे 'इहेवे'ति देशतः प्रत्यक्षासन्ने न पुनरसंख्येयत्वात् जम्बूद्वीपा- नामन्यत्रेतिभावः भारते वर्षे—क्षेत्रे 'दाहिणड्डभरहे'त्ति दक्षिणार्धभरते नोत्तरार्द्धभरते 'देवी'ति राजभार्या 'वण्णओ'त्ति वर्णको वाच्यः, स च वक्ष्यमाणधारिण्या इव दृश्यः,

मू. (१०) *तस्स णं सेणियस्स पुत्ते नंदाए देवीए अत्तए अभए नामं कुमारे होत्था अहीण जाव सुरूवे सामदंडभेयउवप्पयाणणीतिसुप्पउत्तणयविहिन्नू ईहावूहमग्गणगवेसणअत्थसत्थ- मइविसारए उप्पत्तियाए वेणइयाए कम्मियाए पारिणामिआए चउव्विहाए बुद्धिए उववेए सेणियस्स रण्णो बहुसु कज्जेसु य कुडुंबेसु य मंतेसु य गुज्झेसु य रहस्सेसु य निच्छएसु य आपुच्छणिज्जे पडिपुच्छणिज्जे मेढी पमाणं आहारे आलंबणं चक्खू मेढीभूए पमाणभूए आहारभूए आलंबणभूए चक्खूभूए सव्वकज्जेसु सव्वभूमियासु लद्धपच्चए विइण्णवियारे रज्जधुरचिंतए यावि होत्था,*

*सेणियस्स रन्नो रज्जं च रट्ठं च कोसं च कोट्ठागारं च बलं च वाहणं च पुरं च अंतेउरं च सयमेव समुवेक्खमाणे २ विहरति*

वृ. 'अत्तए'त्ति आत्मजः अङ्गज इत्यर्थः, 'अहीण जाव सुरूवे'त्ति इह यावत्करणादिदं द्रष्टव्यं 'अहीनपंचिंदियसरीरे' अहीनानि—अन्यूनानि लक्षणतः स्वरूपतो वा पञ्चापीन्द्रियाणि यस्मिंस्तत्तथाविधं शरीरं यस्य स तथा, 'लक्खणवंजणगुणोववेए' लक्षणानि—स्वस्तिकचक्रादीनि व्यञ्जनानि—मषतिलकादीनि तेषां यो गुणः—प्रशस्तता तेनोपपेतो—युक्तो यः स तथा,

उप अप इत इति शब्दत्रयस्य स्थाने शकन्ध्वादिदर्शनादुपपेत इति स्यात्, 'माणुम्माण- पमाणपडिपुण्णसुजायसव्वंगसुंदरंगे' तत्र मानं—जलद्रोणप्रमाणता कथं? —जलस्यातिभृते कुण्डे पुरुषे निवेशिते यज्जलं निस्सरति तद्यदि द्रोणमानं भवति तदा स पुरुषो मानप्राप्त उच्यते, तथा उन्मानं—अर्द्धभारप्रमाणता, कथं?, तुलारोपितः पुरुषो यद्यर्द्धभारं तुलति तदा स उन्मानप्राप्त इत्युच्यते, प्रमाणं—स्वाङ्गुलेनाष्टोत्तरशतोच्छ्रयता, ततश्च मानोन्मानप्रमाणैः प्रतिपूर्णानि—अन्यूनानि सुजातानि—सुनिष्पन्नानि सर्वाणि अङ्गानि—शिरःप्रभृतीनि यस्मिन् तत्तथाविधं सुन्दरमंगं—शरीरं

यस्य स, 'ससिसोमाकारे कंते पियदंसणे' शशिवत् सौम्याकारं कान्तं—कमनीयमत एव प्रियं द्रष्टणां दर्शनं—रूपं यस्य स तथा, अत एव 'सुरूवे'त्ति सुरूप इति, तथा सामदण्डभेदउपप्रदानलक्षणा या राजनीतयः तासां सुष्ठु प्रयुक्तं—प्रयोगो व्यापारणं यस्य स तथा, नयानां—नैगमादीनां उक्त-लक्षणनीतीनां च विधिः—विविधप्रकारस्तान् जानाति यः स तथा, पश्चात्पदद्वयस्य कर्मधारयः, तत्र परस्परोपकारप्रदर्शनगुणकीर्त्तनादिना शत्रोरात्मवशीकरणं साम, तथाविधपरिक्लेशे धनहरणादिको दण्डः, विजिगीषितशत्रुपरिवर्गस्य स्वाम्यादिस्नेहापनयनादिको भेदः, गृहीत-धनप्रतिदानादिकमुपप्रदानं, नयविधयस्तु सप्त नैगमादयो नयाः प्रत्येकं शतभेदा, नीतिभेदास्तु सामनीतेः पञ्च दण्डस्य त्रयः भेदस्य उपप्रदानस्य च पञ्च कामन्दकादिप्रसिद्धा । इति ।

तथा ईहा च—स्थाणुरयं पुरुषो वेत्येवं सदर्थालोचनाभिमुखा मतिचेष्टा अपोहश्च—स्थाणुरेवा-यमित्यादिरूपो निश्चयः मार्गणं च—इह वल्ल्युत्सर्पणादयः स्थाणुधर्मा एव प्रायो घटन्ते इत्याद्यन्व-यधर्मालोचनरूपं गवेषणं च—इह शरीरकण्डूयनादयः पुरुषधर्माः प्रायो न घटन्त इति व्यतिरेक-धर्मालोचनरूपं ईहाव्यूहमार्गणागवेषणानि तैरर्थशास्त्रे—अर्थोपायव्युत्पादग्रंथे कौटिल्य-राजधानीत्यादौ या मतिर्बोधस्तया विशारदः—पण्डितो यः स ईहाव्यूहमार्गणगवेषणार्थशास्त्र-मतिविशारदः, तथौत्पत्तिक्यादिकया बुद्ध्या उपपेतो—युक्तः, तत्रौत्पत्तिकी अदृष्टाश्रुताननुभूतार्थविषयाऽऽकस्मिकी वैनयिकी गुरुविनयलभ्यशास्त्रार्थसंस्कारजन्या कर्म्मजा कृषिवाणिज्यादिकर्माभ्यासप्रभवा पारिणामिकी—प्रायो वयोविपाकजन्या, तथा श्रेणिकस्य राज्ञः बहुषु कार्येषु च—भक्तसेवकराज्यादिदानलक्षणकृत्येषु विषयभूतेषु तथा कुटुम्बेषु च—स्वकीय-परकीयेषु विषयभूतेषु ये मन्त्रादयो निश्चायन्तास्तेषु आप्रच्छनीयः,

तत्र मन्त्रामन्त्रणानि पर्यालोचनानि तेषु च गुह्यानीव गुह्यानि—लज्जनीयव्यवहारगोपितानि तेषु च रहस्यानि—एकान्तयोग्यानि तेषु निश्चयेषु वा—इत्थमेवेदं विधेयमित्येवंरूपनिर्णयेषु अथवा स्वतन्त्रेषु कार्यादिषु षट्सु विषयेषु चकाराः समुच्चयार्थाः आप्रच्छनीयः—सकृत् प्रतिप्रच्छनीयो द्वित्रिकृत्वः, किमिति ?— यतोऽसौ 'मेढि'त्ति खलकमध्यवर्त्तिनी स्थूणायस्यां नियमिता गोपंक्तिर्धान्यं गाहयति तद्वद्यमालम्ब्य सकलमन्त्रिमण्डलं मन्त्रणीयार्थान् धान्यमिव विवेचयति सा मेढी, प्रमाणं—प्रत्यक्षादि तद्वद्यः तद्दृष्टार्थानमव्यभिचारित्वेन तथैव प्रवृत्तिनिवृत्तिगोचरत्वात् स०

तथा 'आधारे' आधारस्येव सर्वकार्येषु लोकानामुपकारित्वात् तथा 'आलंबनं' रज्ज्वादि तद्वदापद्गर्त्तादिनिस्तारकत्वादालम्बनं तथा चक्षुः—लोचनं तद्वल्लोकस्य मन्त्र्यमात्यादिविविधकार्येषु प्रवृत्तिनिवृत्तिविषयप्रदर्शनकत्वाच्चक्षुरिति, एतदेव प्रपञ्चयति—'मेढिभूए' इत्यादि भूतशब्द उपमार्थः सर्वकार्येषु—सन्धिविग्रहादिषु सर्वभूमिकासु—मन्त्रिअमात्यादिस्थानकेषु लब्धः—उपलब्धः प्रत्ययः—प्रतीतिरविसंवादिवचनं च यस्य स तथा विइण्णवियारे'त्ति वितीर्णोराज्ञाऽनुज्ञातो विचारः—अवकाशो यस्य विश्वसनीयत्वात् असौ वितीर्णविचारः सर्वकार्यादिष्विति प्रकृतं,

अथवा 'विण्णवियारे' विज्ञापिता राज्ञो लोकप्रयोजनानां निवेदयिता, किं बहुना ? —राज्यधुरश्चिन्तकोऽपि—राज्यनिर्वाहकश्चाप्यभूत्, एतदेवाह—श्रेणिकस्य राज्ञो राज्यं च—राष्ट्रादिसमुदायात्मकं राष्ट्रं च—जनपदं कोशं च—भाण्डागारं कोष्ठागारं च—धान्यगृहं बलं

च–हस्त्यादि सैन्यं वाहनं च–वेसरादिकं पुरं च–नगरमन्तःपुरं च–अवरोधनं स्वयमेव–आत्मनैव समुप्रेक्षमाणो–निरूपयन् समुप्रेक्षमाणो वा–व्यापारयन् इह च द्विर्वचनमाभीक्ष्ण्येऽवसेयं, 'विहरति' आस्ते स्म।

मू. (११) *तस्स णं सेणियस्स रन्नो धारिणी नामं देवी होत्था। जाव सेणियस्स रन्नो इट्ठा जाव विहरइ।*

वृ. 'धारणी नामं देवी होत्था जाव सेणियस्स रन्नो इट्ठा जाव विहरइ' इत्यत्र द्विर्यावच्छब्दकरणादेवं द्रष्टव्यं 'सुकुमालपाणिपाया अहीनपंचेंदियसरीरा लक्खणवंजणगुणोववेया मानुम्माणपमाणसुजायसंव्वंगसुदरंगी ससिसोमाकारा कंता पियदंसणा सुरूवा करतलपरिमिततिवलियबलियमज्झा' करतलपरिमीतो–मुष्टिग्राह्यस्त्रिवलीको–रेखात्रयोपेतो वलितो–बलवान् मध्यो–मध्यभागो यस्याः सा तथा,

'कोमुईरयणिकरविमलपडिपुन्नसोमवयणा' कौमुदीरजनीकरवत् कार्त्तिकीचन्द्र इव विमलं–प्रतिपूर्णं सौम्यं च वदनं यस्याः सा तथा 'कुंडलुल्लिहियगंडलेहा'; कुण्डलाभ्यामुल्लिखिता–घृष्टा गण्डलेखाः–कपोलविरचितमृगमदादिरेखा यस्याः सा तथा 'सिंगारागारचारुवेसा' शृङ्गारस्य–रसविशेषस्यागारमिवागारं अथवा शृङ्गारो–मण्डनभूषणाटोपः तत्प्रधान आकारः–आकृतिर्यस्याः सा तथा, चारुर्वेषो–नेपथ्यं यस्याः सा तथा, ततः कर्मधारयः,

तथा 'संगयगय हसिय भणिय विहिय विलास सललिय संलाव णिउण जुत्तोवयार कुसला' संगता–उचिता गतहसितभणितविहितविलासा यस्याः सा तथा, तत्र विहितं–चेष्टितं, विलासो–नेत्रचेष्टा, तथा सह ललितेन–प्रसन्नतया ये संलापाः–परस्परभाषणलक्षणास्तेषु निपुणा या सा तथा, युक्ता–संगता ये उपचारालोकव्यवहारास्तेषु कुशला या सा तथा, ततः पदत्रयस्य कर्मधारयः,

'पासाईया' चित्तप्रसादजनिका 'दरिसणिज्जा' यां पश्यच्चक्षुर्न श्राम्यति, 'अभिरूपा' मनोज्ञरूपा 'पडिरूवा' द्रष्टारं द्रष्टारं प्रति रूपं यस्याः सा तथा,

'सेणियस्स रन्नो इट्ठा वल्लमा' कांता काम्यत्वात् प्रिया प्रेमविषयत्वात् मणुन्ना सुन्दरत्वात् 'नामधेज्जा' नामधेयवती प्रशस्तनामधेयवतीत्यर्थः नाम वा धार्यं–हृदि धरणीयं यस्याः सा तथा, 'वेसासिया' विश्वसनीयत्वात् 'सम्मया' तत्कृतकार्यस्य सम्मतत्वाद्बहुमता–बहुशो बहुभ्यो वाऽन्येभ्यः सकाशान्मता बहुमता बहुमानपात्रं वा 'अणुमया' विप्रियकरणस्यापि पश्चान्मता अनुमता 'भंडकरंडगसमाणा' आभरणकरण्डकसमानोपादेयत्वात् 'तेल्लकेला इव सुसंगोविया' तैल्लकेला–सौराष्ट्रप्रसिद्धो मृन्मयस्तैलस्य भाजनविशेषः स च भङ्गभयाल्लोचनभयाच्च सुष्ठु संगोप्यते एवं साऽपि तथोच्यते 'चेलपेडा इव सुसंपरिगिहीया' वस्त्रमञ्जूषेवेत्यर्थः,

'रयणकरंडगोविव सुसारक्खिया' सुसंरक्षितेत्यर्थः, कुत इत्याह, 'मा णं सीयं मा णं उण्हं मा णं दंसा मा णं मसगा मा णं वाला मा णं चोरा मा णं वाइयपित्तियसंभियसन्निवाइयविविहरोगायंका फुसंतुत्तिकट्टु सेणिएणं रन्ना सद्धिं विउलाइं भोगभोगाइं भुंजमाणा विहरति' माशब्दा निषेधार्थाः, णंकारा वाक्यालङ्कारार्थाः, अथवा 'मानणं' ति मैनामिति प्राकृतत्वात्, व्यालाः–श्वापदभुजगाः रोगाः–कालसहाः आतङ्काः–सद्योघातिनः, इतिकट्टु–इतिकृत्वा इतिहेतोर्भोगभोगान्–अतिशयवद्भोगानिति,

**मू. (१२)** *तए णं सा धारिणी देवी अन्नया कयाइ तंसि तारिसगंसि छक्कडुकलट्ठम-ट्ठसंठियखंभुग्गयं पवरवरसालभंजियउज्जलमणिकणगरणभूमियविडकजालद्धचंदणिज्जूहकंत-रकणयालिचंदसालियाविभत्तिकलिते सरसच्छधाऊवलवण्णरइए बाहिरओ दूमियघट्ठमट्ठे अब्भिंतरओ पत्तसुविलिहियचित्तकम्मे नानाविहपंचवण्णमणिरयणकोट्टिमतले पउमलयाफुल्ल-वल्लिवरपुप्फजातिउल्लोयचित्तियतले वंदनवरकणगकलससुविणिम्मियपडिपुंजिय- सरसपउम-सोहंतदारभाए पयरगालंबंतमणिमुत्तदामसुविरइयदारसोहे सुगंधवरकुसुम- मउयपम्हलसयणोवयारे मणहिययनिव्वुइयरे कप्पूरलवंगमलयचंदनकालागुरुपवरकुंदुरुक्कतुरुक्कधूवडज्झंतसुरभिमधम-धंतगंधुद्धुयाभिरामे सुगंधवरगंधिए गंधवट्टिभूते मणिकिरण- पणासियंधकारे किं बहुना ? –*

*जुइगुणेहिं सुरवरविमाणवेलंबियवरघरए तंसि तारिसगंसि सयणिज्जंसि सालिंगणवट्टिए उभओ बिब्बोयणे दुहओ उन्नउ मज्झेणयगंभीरे गंगापुलिणवालुयाउद्दालसालिसए उयचिय-खोमदुगुल्लपट्टपडिच्छण्णे अच्छरयमलयनवतयकुसत्तलिंबसीहकेसरपच्चुत्थए सुविरइयरयत्ताणे रत्तंसुयसंवुए सुरम्मे आइणगरूयबूरणवणीयतुल्लफासे पुव्वरत्तावरत्तकालसमयंसि सुत्तजागरा ओहीरमाणी २ एगं महं सत्तुस्सेहं रययकूडसन्निहं नहयलंसि सोमं सोमागारं लीलायंतं जंभायमाणं मुहमतिगयं गयं पासित्ता णं पडिबुद्धा ।*

*तते णं सा धारिणी देवी अयमेयारूवं उरालं कल्लाणं सिवं धन्नं मगंल्लं सस्सिरीयं महासुमिणं पासित्त णं पडिबुद्धा समाणी हट्ठतुट्ठा चित्तमाणंदिया पीइमणा परमसोमणस्सिया हरिस-वसविसप्पमाणहियया धाराहयकलंबपुप्फगंपिव समूससियरोमकूवा तं सुमिणं ओगिण्हइ २ सयणिज्जाओ उट्ठेति २ पायपीढातो पच्चोरुहइ पच्चोरुहइत्ता अतुरियमचवलमसंभंताए अविलंबियाए रायहंससरिसीए गतीए जेणामेव से सेणिए राया तेणामेव उवागच्छइ उवागच्छइत्ता सेणियं रायं ताहिं इट्ठाहिं कंताहिं पियाहिं मणुन्नाहिं मणामाहिं उरालाहिं कल्लाणाहिं सिवाहिं धन्नाहिं मंगल्लाहिं सस्सिरियाहिं हिययगमणिज्जाहिं हिययपल्हायणिज्जाहिं मियमहुररिभियगंभीरसस्सिरीयाहिं गिराहिं संलवमाणी २ पडिबोहेइ पडिबोहेत्ता सेणिएणं रन्ना अब्भणुन्नाया समाणी नानामणिकणग-रयणभतिचित्तंसि भद्दासणंसि निसीयति २ त्ता आसत्था विसत्था सुहासणवरगया करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु सेणियं रायं एवं वदासी–*

*एवं खलु अहं देवाणुप्पिया ! अज्ज तंसि तारिसगंसि सयणिज्जंसि सालिंगणवट्टिए जाव नियगवयणमइवयंतं गयं सुमिणे पासित्ता णं पडिबुद्धा, तं एयस्स णं देवाणुप्पिया ! उरालस्स जाव सुमिणस्स के मन्ने कल्लाणे फलवित्तिविसेसे भविस्सति ? ।*

**वृ.** 'तए णं'ति ततोऽनन्तरं 'तंसि तारिसयंसि' त्ति यदिदं वक्ष्यमाणगुणं तस्मिस्ता दृशाके यादृशमुपचितपुण्यस्कन्धानामङ्गिनामुचितं 'वरघरए'त्ति संबन्धः वासभवने इत्यर्थः, कथंभूते ? – 'षट्काष्ठकं' गृहस्य बाह्यालन्दकं षड्दारुकमिति यदागमप्रसिद्धं, द्वारमित्यन्ये स्तम्भवि-शेषणमिदमित्यन्ये, तथा लष्टा–मनोज्ञा मृष्टा–मसृणाः संस्थिता–विशिष्टसंस्थानवन्तो ये स्तम्भास्तथा-उद्गता–ऊर्द्धं गता स्तम्भेषु वा उद्गता–व्यवस्थिताः स्तम्भोद्गताः प्रवराणां वराः प्रवरवराः– अतिप्रधाना याः शालभञ्जिकाः–पुत्रिकास्तथा उज्ज्वलानां मणीनां–चंद्रकान्तादीनां कनकस्य रत्नानां–कर्केतनादीनां या स्तूपिका–शिखरं, तथा विटङ्कः–कपोतपाली वरण्डिकाधोवर्त्ती

अस्तरविशेषः जालं–सच्छिद्रो गवाक्षविशेषः, अर्द्धचन्द्रः–अर्धचन्द्रकारं सोपानं निर्यूहकं–द्वारपार्श्वविनिर्गतदारु अंतरं–अस्तरविशेष एव पानीयान्तरमिति सूत्रधारैर्यद् व्यपदिश्यते निर्यूहकद्वयस्य यान्यन्तराणि तानि वा निर्यूहकान्त- राणि कणकालीअस्तरविशेषश्चन्द्रसालिका च–गृहोपरि शाला एतेषां गृहांशानां या विभक्तिः– विभजनं विविक्तता तया कलितं–युक्तं यत्तत्तथा तस्मिन्, 'सरसच्छवाडवडंबसरइए' त्ति स्थाप्यं, कैश्चित् पुनरेवं संभावितमिदं–

'सरसच्छधाउवलवन्नरइए' त्ति तत्र सरसेन अच्छेन धातूपलेन–पाषाणधातुना गैरिकविशेषेणेत्यर्थः वर्णो रचितो यत्र तत्तथा 'बाहिरओ दूमियघट्टमट्ठे' त्ति दूमितं–धवलितं घृष्टं—कोमलपाषाणादिना अत एव मृष्टं–मसृणं यत्तत्तथा तस्मिन्, तथा अभ्यन्तरतः प्रशस्तं–स्वकीय २ कर्मव्यापृतं शुचि–पवित्र लिखितं चित्रकर्म यत्र तत्तथा तस्मिन्, तथा नानिविधानां जातिभेदेन पञ्चवर्णानां मणिरत्नाना सत्कं कुट्टिमतलं–मणिभूमिका यस्मिंस्तत्तथा तत्र तथा पद्मैः–पद्माकारैरेवं लताभिरशोकलताभिः पद्मलताभिर्वा मृणालिकाभिः पुष्पवल्लीभिः–पुष्पप्रधानाभिः पत्रवल्लिभिः तथा वराभिः पुष्पजातिभिः–मालतीप्रभृतिभिश्चित्रितमुल्लोकतलं–उपरितनभागो यस्मिन् तत्तथा तत्र, इह च प्राकृतत्वेन 'उल्लोयचित्तियतले' इत्येवं विपर्ययनिर्देशो द्रष्टव्य इति, अथवा पद्मादिभिरुल्लोकस्य चित्रितं तलं–अधोभागो यस्मिन्निति, तथा वन्द्यन्त इति वन्दना–मङ्गल्याः ये वरकनकस्य कलशाः सुष्ठु–'निम्मिय' त्ति न्यस्ताः प्रतिपूजिताः–चन्दनादिचर्चिताः सरसपद्माः— सरसमुखस्थगनकमलाः शोभमाना द्वारभागेषु यस्य पाठान्तरापेक्षया चन्दनवरकनककलशैः सुन्यस्तैस्तथा प्रतिपुञ्जितैः–पुञ्जीकृतैः सरसपद्मैः शोभमाना द्वारभागा यस्य तत्तथा तस्मिन्,

तथा प्रतरकाणि–स्वर्णादिम वा आभरणविशेषास्तत्प्रधानैर्मणिमुक्तानां दामभिः–स्रग्भिः सुष्ठु विरचिता द्वारशोभा यस्य तत्तथा तस्मिन्, तथा सुगन्धिवरकुसुमैर्मृदुकस्य–मृदोः पक्ष्मलस्य च–पक्ष्मवतः शयनस्य–तूल्यादिशयनीयस्य यः उपचारः–पूजा उपचारो वा स विद्यते यस्मिन्मण इत्यस्य मत्वर्थीयत्वात् तत् सुगन्धिवरकुसुममृदुपक्ष्मलशयनीयोपचारवत्तच्च यद् हृदयनिर्वृतिकरं च–मनःस्वास्थ्यकरं तत्तथा तस्मिन्,– तथा कर्पूरश्च लवङ्गानि च–फलविशेषाः मलयचन्दनं च–पर्वतविशेषप्रभवं श्रीखण्डं कालागुरुश्च–कृष्णागरुः प्रवरकुन्दुरुक्कं च–चीडाभिधानो गन्धद्रव्यविशेषः तुरुष्कं च–सिल्हकं धूपश्च–गन्धद्रव्यसंयोगज इति द्वन्द्वः, एतेषां वा संबन्धी यो धूपः तस्य दह्यमानस्य सुरभिर्यो मघमघायमानः–अतिशयवान् गन्धः उद्धूतः–उद्भूतः तेनाभिरामम्–अभिरमणीयं यत्तत्तथा तस्मिन्, तथा सुष्ठु गन्धवराणां–प्रधानचूर्णानां गन्धो यस्मिन् अस्ति तत् सुगन्धवरगन्धिकं तस्मिन्, तथा गंधवर्त्तिः–गन्धद्रव्यगुटिका कस्तूरिका वा गन्धस्तद्गुटिका गन्धवर्त्तिस्तद्भूते–सौरभ्यातिशया-त्तत्कल्पे, तथा मणिकिरणप्रनाशितान्धकारे,

किं बहुना वर्णकेन ?, वर्णकसर्वस्वमिदं द्युत्या गुणैश्च सुरवरविमानं विडम्बयति–जयति यद्वरगृहकं तत्तथा तत्र, तथा तस्मिन् तादृशे शयनीये सहालिङ्गनवर्त्या–शरीरप्रमाणोपधानेन यत्तत्सालिङ्गनवर्त्तिकं तत्र, 'उभओ विब्बोयणे' त्ति उभयतः उभौ–शिरोऽन्तपादान्तावाश्रित्य 'विब्बोयणे' ति उपधाने यत्र तत्तथा तस्मिन्, 'दुहओ' त्ति उभयतः उन्नते मध्ये नतं च तन्निम्नत्वाद्गम्भीरं च महत्त्वान्नतगम्भीरं अथवा मध्येन च भागेन तु गम्भीरे–अवनते गङ्गापुलिनवालुकायाः अवदातः–अवदलनं पादादिन्यासेऽधोगमनमित्यर्थः तेन 'सालिसए' त्ति सदृशकमति-

नम्रत्वाद्यत्तत्तथा तत्र, दृश्यते च हंसतूल्यादिष्वयं न्याय इति। तथा 'उयचिय'त्ति परिकर्मितं यत् क्षौमं दूकूलं–कार्पासिकमतसीमयं वा वस्त्रं तस्य युगलापेक्षया यः पट्टः–एकः शाटकः स प्रतिच्छादनम्–आच्छादनं यस्य तत्तथा तत्र, तथा आस्तरको मलको नवतः करुशको लिम्बः सिंहकेसरश्चैते आस्तरणविशेषास्तैः प्रत्यवस्तृतम्–आच्छादितं यत्तथा, इह चास्तरको लोकप्रतीत एव मलककुशक्तौ तु रूढिगम्यौ नवतस्तु ऊर्णाविशेषमयो जीनमिति लोके यदुच्यते,

लिम्बो–बालोरभ्रस्योर्णायुक्ता कृतिः सिंहकेसरो–जटिलकम्बलः, तथा सुष्ठु विरचितं शुचि वा रचितं रजस्त्राणं–आच्छादनविशेषोऽपरिभोगावस्थायां यस्मिंस्तत्तथा तत्र, रक्तांशुक-संवृते–मशकगृहाभिधानवस्त्रवृते सुरम्ये तथा आजिनकं–चर्ममयो वस्त्रविशेषः स च स्वभावा-दतिकोमलो भवति तथा रूतं–कर्पासपक्ष्म बूरो–वनस्पतिविशेषः नवनीतं–म्रक्षणं एभिस्तुल्यः स्पर्शो यस्य, तूलं वा–अर्कतूलं तत्र पक्षे एतेषामिव स्पर्शो यस्य तत्तथा तत्र, पूर्वरात्रश्चासावपररात्रश्च पूर्वरात्रापररात्रः स एव काललक्षणः समयः न तु सामाचारादिलक्षणः पूर्वरात्रापररात्रकालसमयस्तत्र, मध्यरात्रे इत्यर्थः, इह चार्षत्वादेकरेफलोपेन 'पुव्वरत्तावरत्ते'त्युक्तं, अपररात्रशब्दो वाऽयमिति, सुप्तजागरा–नातिसुप्ता नातिजाग्रती, अत एवाह 'ओहीरमाणी २'त्ति वारं वारमीषन्निद्रां गच्छन्तीत्यर्थः, एकं महान्तं सप्तोत्सेधमित्यादिविशेषणं मुखमतिगतं गजं दृष्टाप्रतिबुद्धेति योगः, तत्र सप्तोत्सेधं सप्तसु–कुम्भादिषु स्थानेषून्नतं सप्तहस्तोच्छ्रितं वा 'रययं'ति रूप्यं 'नहयलंसि'ति नभस्त- लान्मुखमतिगतमिति योगः,

वाचनान्तरे त्वेवं दृश्यते–'जाव सीहं सुविणे पासित्ता णं पडिबुद्धा' तत्र यावत्करणादिदं द्रष्टव्यं 'एक्कं च णं महंतं पंडुरं धवलयं सेयं' एकार्थशब्दत्रयोपादानं चात्यन्तशुक्लताख्यापनार्थं, एतदेवोपमानेनाह–'संखउलविमलदहिधणगोखीर (विमल) फेणरयणिकरपगासं' शंखकुलस्येव विमलदध्न इव धनगोक्षीरस्येव विमलफेनस्येव रजनीकरस्येव प्रकाशः–प्रभा यस्य स तथा तं, अथवा 'हाररजतखीरसागरदगरयमहासेलपंडुरतरोरुरमणिज्जदरिसणिज्जं' हारादिभ्यः पाण्डुरतरो यः स तथा, इह च महाशैलो–महाहिमवान् तथा उरुः–विस्तीर्णः रमणीयो–रम्योऽत एव दर्शनीय इति पदचतुष्टयस्य कर्मधारयोऽतस्तं, तथा 'थिरलट्ठपउट्ठपीवरसुसिलिट्ठविसिट्ठतिक्खदाढा-विडंबियमुहं' स्थिरौ–अप्रकम्पौ लष्टौ–मनोज्ञौ प्रकोष्ठौ–कूर्परात्रेतनभागौ यस्य स तथा, तथा पीवराः–स्थूला सुश्लिष्टाः–अविसर्वरा विशिष्टा–मनोहरास्तीक्ष्णा या दंष्ट्रास्ताभिः कृत्वा 'विडंबियं'ति विवृतं मुखं यस्य स तथा ततः कर्मधारयस्तं, तथा 'परिकम्मियजच्चकमलकोमलमाइयसोहंतलट्ठउट्ठं' परिकर्म्मितं–कृतपरिकर्मा 'माइय'त्ति मात्रावान् परिमित् इत्यर्थः, शेषं प्रतीतं, तथा 'रत्तुप्पल-पत्तमउयसुकुमाल-तालुनिल्लालियग्गजीहं' रक्तोत्पलपत्रमिव मृदुकेभ्यः सुकुमारमतिकोमलं तालु च निर्लालिताग्रा– प्रसारिताग्रा जिह्वा च यस्य स तथा तं,

तथा 'महुगुलियभिसंतपिंगलच्छं' मधुगुटिकेव–क्षौद्रवर्त्तिरिव 'भिसंत'त्ति दीप्यमाने पिङ्गले–कपिले अक्षिणी यस्य स तथा तं, तथा 'मूसागयपवरकणयताविय आवत्तायंतवट्टतडिय-विमलसरिसनयणं' मूषागतं–मृन्मयभाजनविशेषस्थं यत्प्रवरकनकं तापितमाग्निधमनात् 'आवत्तायंत'त्ति आवर्तत कुर्वत् तद्वत् तथा वृत्ते च तर्दिते – विवृत्ते विमले च सदृशे च–समाने नयने यस्य स तथा तं, अत्र च 'वट्टतड' इत्यातावदेव पुस्तके दृष्टं संभावनया तु वृत्ततर्दित इति

व्याख्यातमिति, पाठान्तरेण तु 'वट्टपडिपुण्णपसत्थनिद्धमहुगुलियपिंगलच्छं' स्फुटश्चायं पाठः,

तथा 'विसालपीवरभमरोरुपडिपुण्णविमलखंधं' विशालो–विस्तीर्णः पीवरो–मांसलः 'भ्रमरोरुः' भ्रमरा–रोमावर्त्ता उरवो–विस्तीर्णा यत्र स तथा परिपूर्णो विमलश्च स्कन्धो यस्य स तथा तं, अथवा 'पडिपुन्नसुजायखंधं' तथा 'मिदुविसदसुहुमलक्खणपसत्थविच्छिन्नकेसरसडं' मृद्व्योविशदा–अविमूढाः सूक्ष्मा लक्षणप्रशस्ताः–प्रशस्तलक्षणा विस्तीर्णाः" केसरसटाः–स्कन्धकेशरजटा यस्य स तथा तं, अथवा 'निम्मलवरकेसरधरं' तथा 'ऊसियसुनिम्मियसुजाय-अप्फोडियलंगूलं' उच्छ्रितम्–ऊर्ध्वं नीतं सुनिर्मितं सुष्ठु भंगुरतया न्यस्तं सुजातं सद्गुणोपपेततया आस्फोटितं भुवि लाङ्गूलं–पुच्छं येन स तथा तं, सौम्यं–उपशान्तं सौम्याकारं–शान्ताकृतिं, 'लीलायंतं'ति लीलां कुर्वन्तं 'जंभायंतं' विजृम्भमाणं शरीरचेष्टाविशेषं विदधानं 'गगणतलाओ ओवयमाणं सीहं अभिमुहं मुहे पविसमाणं पासित्ता पडिबुद्ध'त्ति 'अयमेयारूवं' ति इमं महास्वप्नमिति संबंधः एतदेव–वर्णितस्वरूपं रूपं यस्य स्वप्नस्य न कविकृतमूनमधिकं वा स तथा तं,–

–'उरालं' ति उदारं प्रधानं कल्याणं–कल्याणानां शुभसमृद्धिविशेषाणां कारणत्वात् कल्ये वा–नीरोगत्व- मणति–गमयति कल्याणं तद्धेतुत्वात्, शिवम्–उपद्रवोपशमहेतुत्वात् धन्यं धनावहत्वात् 'मंगल्यं' मङ्गले दुरितोपशमे साधुत्वात्सश्रीकं–सशोभनमिति 'समाणी'त्ति सती हृष्टतुष्टा–अत्यर्थं तुष्टा अथवा हृष्टा–विस्मिता तुष्टा–तोषवती, 'चित्तमाणंदिय'त्ति चित्तेनानन्दितं वा चित्तं यस्याः सा चित्तानन्दिता, मकारः प्राकृतत्वात्, प्रीतिर्मनसि यस्याः सा प्रीतिमनाः, 'परमसोमणस्सिया' परमं सौमनस्यं संजातं यस्याः सा परमसौमनस्यिता, हर्षवशेन विसर्पद्–विस्तारायायि हृदयं यस्यः सा तथा, सर्वाणि प्राय एकार्थिकान्येतानि पदानि प्रमोदप्रकर्षप्रतिपादनार्थत्वात् स्तुतिरूपत्वाच्च न दुष्टानि, आह च–

॥ १ ॥ "वक्ता हर्षभयादिभिराक्षिप्तमनास्तथा स्तुवन्निन्दन् ।
यत्पदमसकृद्ब्रूयात्तत्पुनरुक्तं न दोषाय ॥" इति,

'पच्चोरुहइ'त्ति प्रत्यवरोहति, अत्वरितं मानसौत्सुक्याभावेनाचपलं कायतः असंभ्रान्त्याऽस्खलन्त्या अविलम्बितया–अविच्छिन्नतया 'रायहंससरिसीए'त्ति राजहंसगमनसदृश्या गत्या 'ताहिं' ति या विशिष्टगुणोपेतास्ताभिर्गीर्भिरिति संबन्धः, इष्टाभिः–तस्य वल्लभाभिः कान्ताभिः–अभिलषिताभिः सदैव तेन प्रियाभिः–अद्वेष्याभिःसर्वेषामपि मनोज्ञाभिः–मनोरमाभिः मनःप्रियाभिश्चिन्तयापि उदाराभिः–उदारनादवर्णोच्चारादियुक्ताभिः कल्याणाभिःसमृद्धिका- रिकाभिः शिवाभिः–गीर्दोषानुपद्रुतानि धन्याभिः–धनलम्भिकाभिर्मङ्गल्याभिः–मङ्गलसाध्वीभिः सश्रीकाभिः–अलङ्कारादिशोभावद्भिः हृदयगमनीयाभिः–हृदये या गच्छन्ति कोमलत्वात् सुबोधत्वाच्च तास्तथा ताभिः,

हृदयप्रह्लादिकाभिः–हृदयप्रह्लादनीयाभिः आह्लादजनकाभिः

'मितमधुररिभित- गंभीरसश्रीकाभिः' मिताः–वर्णपदवाक्यापेक्षया परिमिताः मधुराः–स्वरतः रिभिताः–स्वरघोलना-प्रकारवत्यः गम्भीराः–अर्थत शब्दतश्च सह श्रिया–उक्तगुणलक्ष्म्या यास्तास्तथा ततः पदपञ्चकस्य कर्मधारयस्ततस्ताभिः गीर्भिः–वाग्भिः संलपन्ती–पुनः पुनर्जल्पन्तीत्यर्थः नानमणिकनकरत्नानां भक्तिभिः–विच्छित्तिभिश्चित्रं–विचित्रं यत्तत्तथा तत्र

दुःखासेव्यं नैर्ग्रन्थं प्रवचनं भवद्भिरुक्तमेवं–दुरनुचरमेव, केषां ? –क्लीबानां–मन्दसंहननानां कातराणां–चित्तावष्टम्भ- वर्जितानामत एव कापुरुषाणांकुत्सितनराणां, विशेषणद्वयं तु कण्ठ्यं, पूर्वोक्तमेवार्थमाह– दुरनुचरं–दुःखासेव्यं नैर्ग्रन्थं प्रवचनमिति प्रकृतं, कस्येत्याह–प्राकृतजनस्य, एतदेव व्यतिरेकेणाह– 'नो चेव णं' नैव धीरस्य–साहसिकस्य दुरनुचरमिति प्रकृतं, एतदेव वाक्यान्तरेणाह– निश्चितंनिश्चयवद् व्यवसितं–व्यवसायः कर्म्म यस्य स तथा तस्य,

–'एत्थं' त्ति अत्र नैर्ग्रन्थे प्रवचने किं दुष्करं, ? न किञ्चित्दुरनुचरमित्यर्थः, कस्यामित्याह– 'करणतायां' करणानांसंयमव्यापाराणां भावः करणता तस्यां, संयमयोगेषु मध्ये इत्यर्थः तत्–तस्मादिच्छाम्यम्बतात ! ।

**मू. (३३)** *तते णं तं मेहं कुमारं अम्मापियरो जाहे नो संचाइंति बहूहिं विसयानुलोमाहि य विसयपडिकूलाहि य आघवणाहि य पन्नवणाहि य सन्नवणाहि य विन्नवणाहि य आघवित्तए वा पन्नवित्तए वा सन्नवित्तए वा विन्नवित्तए वा ताहे अकामए चेव मेहं कुमारं एवं वदासी –*

*इच्छामो ताव जाया ! एगदिवसमवि ते रायसिरिं पासित्तए, तते णं से मेहे कुमारे अम्मापितरमणुवत्तमाणे तुसिणीए संचिट्ठति, तते णं से सेणिए राया कोडुंबियपुरिसे सद्दावेति २ त्ता एवं वदासी–खिप्पामेव भो देवाणुप्पिया ! मेहस्स कुमारस्स महत्थं महग्घं महरिहं विउलं रायाभिसेयं उवट्ठवेह, तते णं ते कोडुंबियपुरिसा जाव तेवि तहेव उवट्ठवेंति,*

*तते णं से सेणिए राया बहूहिं गननायगदंडणायगेहि य जाव संपरिवुडे मेहं कुमारं अट्ठसएणं सोवन्नियाणं कलसाणं एव रुप्पमयाणं कलसाणं सुवन्नरुप्पमयाणं कलसाणं मणियमाणं कलसाणं सुवन्नमणिमयाणं० रुप्पमणिमयाणं० सुवन्नरुप्पमणिमयाणं० भोमेज्जाणं० सव्वोदएहिं सव्वमट्टियाहिं सव्वपुप्फेहिं सव्वगंधेहि सव्वमल्लेहिं सव्वोसहिहि य सिद्धत्थएहि य सव्विड्ढीए सव्वजुईए सव्वबलेणं जाव दुंदुभिनिग्घोसणादितरवेणं महया २ रायाभिसेएणं अभिसिंचति २ करयल जाव कट्टु एवं वदासी– जय जय नंदा ! जय २ भद्दा ! जय नंदा० भद्दं ते अजियं जिणेहि जियं पालयाहि जियमज्झे वसाहि अजियं जिणेहि सत्तुपक्खं जियं च पालेहि मित्तपक्खं जाव भरहो इव मणुयाणं रायगिहस्स नगरस्स अन्नेसिं च बहूणं गामागरनगरजाव सन्निवेसाणं आहेवच्चं जाव विहराहित्ति कट्टु जय २ सद्दं पउंजंति,*

*तते णं से मेहे राया जाते महया जाव विहरति, तते णं तस्स मेहस्स रन्नो अम्मापितरो एवं वदासी–भण जाया ! किं दलयामो किं पयच्छामो किं वा ते हियइच्छिए सामत्थे (मन्ते) ?,*

*तते णं से मेहे राया अम्मापितरो एवं वदासी–इच्छामि णं अम्मयाओ ! कुत्तियावणाओ रयहरणं पडिग्गहगं च उवणेह कासवयं च सद्दावेह, तते णं से सेणिए राया कोडुंबियपुरिसे सद्दावेति सद्दावेत्ता एवं वदासी–गच्छह णं तुब्भे देवाणुप्पिया ! सिरिघरातो तिन्नि सयसहस्सातिं गहाय दोहिं सयसहस्सेहिं कुत्तियावणाओ रयहरणं पडिग्गहगं च उवणेह सयसहस्सेणं कासवयं सद्दावेह,*

*तते णं ते कोडुंबियपुरिसा सेणिएणं रन्ना एवं वुत्ता समाणा हट्ठतुट्ठा सिरिघराओ तिन्नि सयसहस्सातिं गहाय कुत्तियावणातो दोहिं सयसहस्सेहिं रयहरणं पडिग्गहं च उवणेंति सयसहस्सेणं कासवयं सद्दावेंति, तते णं से कासवए तेहिं कोडुंबियपुरिसेहिं सद्दाविए समाणे हट्ठे जाव हयहियए*

ण्हाते कयबलिकम्मे कयकोउयमंगलपायच्छित्ते सुद्धप्पावेसातिं वत्थाइं मंगलाइं पवरपरिहिए अप्पमहग्घाभरणालंकितसरीरे जेणेव सेणिए राया तेणामेव उवागच्छति २ सेणियं रायं करयलमंजलिं कट्टु एवं वयासी–संदिसए णं देवाणुप्पिया ! जं मए करणिज्जं,

ततेणं से सेणिए राया कासवयं एवं वदासी–गच्छाहि णं तुमं देवाणुप्पिया ! सुरभिणा गंधोदएणं निक्के हत्थपाए पक्खालेह सेयाए चउप्फालाए पोतीए मुहं बंधेत्ता मेहस्स कुमारस्स चउरंगुलवज्जे निक्खमणपाउग्गे अग्गकेसे कप्पेहि,

ततेणं से कासवए सेणिएणं रन्ना एवं वुत्ते समाणे हट्ठ जाव हियए जाव पडिसुणेति २ सुरभिणा गंधोदएणं हत्थपाए पक्खालेति २ सुद्धवत्थेणं मुहं बंधति २ ता परेणं जत्तेणं मेहस्स कुमारस्स चउरंगुलवज्जे निक्खमणपाउग्गे अग्गकेसे कप्पति, ततेणं तस्स मेहस्स कुमारस्स माया महरिहेणं हंसलक्खणेणं पडसाडएणं अग्गकेसे पडिच्छति २ सुरभिणा गंधोदएणं पक्खालेति २ सरसेणं गोसीसचंदणेणं चच्चाओ दलयति २ सेयाए पोतीए बंधेति २ रयणसमुग्गयंसि पक्खिवति २ मंजूसाए पक्खिवति २ हारवारिधारसिंदुवार- छिन्नमुत्तावलिपगासाइं अंसूइं विणिम्मुयमाणी २ रोयमाणी २ कंदमाणी २ विलवमाणी २ एवं वदासी–

एस णं अम्हं मेहस्स कुमारस्स अब्भुदएसु य उस्सवेसु य पव्वेसु य तिहीसु य छणेसु य जन्नेसु य पव्वणीसु य अपच्छिमे दरिसणे भविस्सइत्तिकट्टु उस्सीसामूले ठवेंति, ततेणं तस्स मेहस्स कुमारस्स अम्मापितरो उत्तरावक्कमणं सीहासणं रयावेंति मेहं कुमारं दोच्चंपि तच्चंपि सेयपीयएहिं कलसेहिं ण्हावेंति २ पम्हलसुकुमालाए गंधकासाइयाए गायातिं लूहेंति २ सरसेणं गोसीसचंदणेणं गायातिं अनुलिंपति २ नासानीसासवायवोज्झं जाव हंसलक्खणं पडगसाडगं नियंसेंति २ हारं पिणद्धेंति २ अद्धहारं पिणद्धेंति २ एगावलिं मुत्तावलिं कणगावलिं रयणावलिं पालंबं पायपलंबं कडगाइं तुडिगाइं केउरातिं अंगयातिं दसमुद्दियानंतयं कडिसुत्तयं कुंडलातिं चूडामणिं रयणुक्कडं मउडं पिणद्धेंति २ दिव्वं सुमणदामं पिणर्णिं २ दद्दुरमलयसुगंधिए गंधे पिणद्धिंति,

ततेणं तं मेहं कुमारं गंठिमवेढिमपूरिमसंघाइमेण चउव्विहेणं मल्लेणं कप्परुक्खगंपिव अलंकितविभूसियं करेंति, ततेणं से सेणिए राया कोडुंबियपुरिसे सद्दावेति २ एवं वयासी–खिप्पामेव भो देवाणुप्पिया ! अनेगखंभसयसन्निविट्ठं लीलट्ठियसालभंजियागं ईहामिगउसभतुरय-नरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तं घंटावलिमहुरमणहरसरं सुभकंतदरिसणिज्जं निउणोवियमिसिमिसिंतमणिरयणघंटियाजालपरिखित्तं अब्भुग्गयवइर-वेतियापरिगयाभिरामं विज्जाहरजमलजंतजुत्तंपिव अच्चीसहस्समालणीयं रूवगसहस्सकलियं भिसमाणं भिब्भिसमाणं चक्खुलोयणलेस्सं सुहफासं सस्सिरीयरूवं सिग्घं तुरितं चवलं वेतियं पुरिससहस्सवाहिणीं सीयं उवट्ठवेह,

ततेणं ते कोडुंबियपुरिसा हट्ठतुट्ठा जाव उवट्ठवेंति, ततेणं से मेहे कुमारे सीयं दूरूहति २ ता सीहासणवरगए पुरत्थाभिमुहे सन्निसन्ने, ततेणं तस्स मेहस्स कुमारस्स माया ण्हाता कयबलिकम्मा जाव अप्पमहग्घाभरणालंकियसरीरा सीयं दूरूहति २ मेहस्स कुमारस्स दाहिणे पासे भद्दासणंसि निसीयति, ततेणं तस्स मेहस्स कुमारस्स अंबधाती रयहरणं च पडिग्गहगं च गहाय सीयं दूरूहति २ मेहस्स कुमारस्स वामे पासे भद्दासणंसि निसीयति,

तते णं तस्स मेहस्स कुमारस्स पिट्ठतो एगा वरतरुणी सिंगारागारचारुवेसा संगयगयहसियभणियचेट्ठियविलाससंलावुल्लावनिउणजुत्तोवयारकुसला आमेलगजमलजुयलवट्टियअब्भुन्नयपीणरतियसंठितपओहरा हिमरययकुंदेंदुपगास सकोरेंटमल्लदामधवलं आयवत्तं गहाय सलीलं ओहारेमाणी २ चिट्ठति,

तते णं तस्स मेहस्स कुमारस्स दुवे वरतरुणीओ सिंगारागार चारुवेसाओ जाव कुसलाओ सीयं दुरूहंती २ मेहस्स कुमारस्स उभओ पासिं नानामणिकणगरयणमहरिहतवणिज्जुज्जलविचित्तदंडाओ चिल्लियाओ सुहुमवरदीहवालाओ संखकुंददगरयअमयमहियफेणपुंजसन्निगासाओ चामराओ गहाय सलीलं ओहारेमाणीओ २ चिट्ठंति, तते णं तस्स मेहकुमारस्स एगा वरतरुणी सिंगारा जाव कुसला सीयं जाव दूरूहति २ मेहस्स कुमारस्स पुरतो पुरत्थिमेणं चंदप्पभवइरवेरुलियविमलदंडं तालविंटं गहाय चिट्ठंति, तते णं तस्स मेहस्स कुमारस्स एगा वरतरुणी जाव सुरूवा सीयं दूरूहति २ मेहस्स कुमारस्स पुव्वदक्खिणेणं सेयं रययामयं विमलसलिलपुन्नं मत्तगयमहामुहाकितिसमाणं भिंगारं गहाय चिट्ठति,

तते णं तस्स मेहस्स कुमारस्स पिया कोडुंबियपुरिसे सद्दावेति २ त्ता एवं वदासी—खिप्पामेव भो देवाणुप्पिया ! सरिसयाणं सरित्तयाणं सरिव्वयणं एगाभरणगहितनिज्जोयाणं कोडुंबियवरतरुणाणं सहस्सं सद्दावेह जाव सद्दावंति, तए णं कोडुंबियवरतरुणपुरिसा सेणियस्स रन्नो कोडुंबियपुरिसेहिं सद्दाविया समाणा हट्ठा ण्हाया जाव एगाभरणगहितणिज्जया जेणामेव सेणिए राया तेणामेव उवागच्छंति २ सेणियं रायं एवं वदासी—संदिसए णं देवाणुप्पिया ! जन्नं अम्हेहिं करणिज्जं, तते णं से सेणिए तं कोडुंबियवरतरुणसहस्सं एवं वदासी—गच्छह णं देवाणुप्पिया ! मेहस्स कुमारस्स पुरिससहस्सवाहिणिं सीयं परिवहेह, तते णं तं कोडुंबियवरतरुणसहस्सं सेणिएणं रन्ना एवं वुत्तं संतं हट्ठं तुट्ठं तस्स मेहस्स कुमारस्स पुरिससहस्सवाहिणीं सीयं परिवहति,

तए णं तस्स मेहस्स कुमारस्स पुरिससहस्सवाहिणिं सीयं दूरूढस्स समाणस्सइ इमे अट्ठट्ठमंगलया तप्पढमयाए पुरतो अहाणुपुव्वीए संपट्ठिया, तं०—सोत्थिय सिरिवच्छ नंदियावत्त वद्धमाणग भद्दासण कलस मच्छ दप्पण जाव बहवे अत्थत्थिया जाव ताहिं इट्ठाहिं जाव अनवरयं अभिनंदंता य अभिथुणंता य एवं वदासी—

जय २ नंदा ! जय २ नंदा जय २ भद्दा ! भद्दं ते अजियाइं जिणाहि इंदियाइं जियं च पालेहिसमणधम्मं जियविग्घोऽविय वसाहि तं देव ! सिद्धिमज्झे निहणाहि रागदोसमल्ले तवेणं धितिधणियबद्धकच्छे मद्दाहि य अट्ठकम्मसत्तू झाणेणं उत्तमेणं सुक्केणं अप्पमत्तो पावय वितिमिरमनुत्तरं केवलं नाणं गच्छ य मोक्खं परमपयं सासयं च अयलं हंता परीसहचमुं णं अभीओ परीसहोवसग्गाणं धम्मे ते अविग्घं भवउत्तिकट्टु पुणो २ मंगलजय २ सद्दं पउंजंति,

तते णं से मेहे कुमारे रायगिहस्स नगरस्स मज्झंमज्झेणं निग्गच्छति २ जेणेव गुणसिलए चेतिए तेणामेव उवागच्छति २ पुरिससहस्सवाहिणीओ सीयाओ पच्चोरुभति

**वृ.** 'महत्थं' ति महाप्रयोजनं महार्थं—महामूल्यं महार्हं—महापूज्यं महतां वा योग्यं राज्याभिषेकं—राज्याभिषेकसामग्रीं उपस्थापयत-सम्पादयत, सौवर्णादीनां कलशानामष्टौ शतानि चतुःषष्टधिकानि 'भोमेज्जाणं' ति भौमानां पार्थिवानामित्यर्थः, सर्वोदकैः—सर्वतीर्थसंभवैः एवं

मूर्तिश्चासाविति। 'जय जये' त्यादि, जय जय त्वं-जयं लभस्व नन्दति नन्दयतीति वा नन्दः-समृद्धः समृद्धिप्रा- पको वा तदामन्त्रणं हे नन्द !, एवं भद्र-कल्याणकारिन् हे जगन्नन्द भद्रं ते भवत्विति शेषः, इह गमे यावत्करणादिदं दृश्यं 'नगरखेडकब्बडदोणमुहमडंबपट्टणसंबाहसन्निवेसाणं आहेवच्चं पोरेवच्चं सामित्तं भत्तितं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे महयाहयनट्टगीय- वाइयतंती- तलतालतुडियघणमुइंगपडुप्पवाइयरवेणं विउलाइं भोगभोगाइं भुंजमाणे विहराहि' त्ति, तत्र करादिगम्यो ग्रामः आकरो-लवणाद्युत्पत्तिभूमिः अविद्यमानकरं नगरं धूलीप्राकारं खेटं कुनगरं कर्बटं यत्र जलस्थलमार्गाभ्यां भाण्डान्यागच्छन्ति तद् द्रोणमुखं यत्र योजनाभ्यन्तरे सर्वतो ग्रामादि नास्ति तन्मडम्बं,

पत्तनं द्विधा-जलपत्तनं स्थलपत्तनं च, तत्र जलपत्तनं यत्र जलेन भाण्डान्यागच्छन्ति, यत्र तु स्थलेन तत् स्थलपत्तनं, यत्र पर्वतादिदुर्गे लोका धान्यानि संवहन्ति स संवाहः, सार्थादिस्थानं सन्निवेशः, आधिपत्यं अधिपतिकर्म रक्षेत्यर्थः, 'पोरेवच्चं' पुरोवर्त्तित्वमग्रेसरत्वमित्यर्थः स्वामित्वं- नायकत्वं भर्तृत्वं-पोषकत्वं महत्तरकत्वं-उत्तमत्वं आज्ञेश्वरस्य-आज्ञाप्रधानस्य सतः तथा सेनापतेर्भावः आज्ञेश्वरसेनापत्यं कारयन् अन्यैर्नियुक्तकैः पालयन् स्वयमेव महता-प्रधानेन 'अहय' त्ति आख्यानप्रतिबद्धं नित्यानुबन्धं वा यन्नाट्यं च-नृत्यं गीतं च-गानं तथा वादितानि यानि तन्त्री च-वीणा तली च-हस्ती तालश्च-कंसिका तुडितानि च-वादित्राणि तथा घनसमा- नध्वनिर्यो मृदङ्गः पटुना पुरुषेण प्रवादितः स चेति द्वन्द्वः ततस्तेषां यो रवस्तेनेति, इतिकट्टु- इतिकृत्वाएवमभिधाय जय २ शब्दं प्रयुङ्क्ते श्रेणिकराज इति प्रकृतं,

ततोऽसौ राजा जातः, 'महया' इह यावत्करणात् एवं वर्णको वाच्यः- "महयाहिमवन्तम- हंतमलयमंदरमहिंदसारे अच्चंतविसुद्धदीहरायकुलवंसप्पसूए निरंतरं रायलक्खणविराइयंगमंगे बहुजणबहुमाणपूइए सव्वगुणसमिद्धे खत्तिए मुदिए मुद्धाभिसित्ते' पित्रादिभिर्मूर्द्धन्यभिषिक्तत्वात् 'माउपिउसुजाए दयपत्ते' दयावानित्यर्थः, सीमंकरे मर्यादाकारित्वात् सीमंधरे कृतमर्यादापलकत्वात्,

-एवं खेमंकरे खेमंधरे, क्षेमं-अनुपद्रवता, 'मणुस्सिंदे जणवयपिया' हितत्वात् 'जणवय- पुरोहिए' शान्तिकारित्वात् सेउकरे-मार्गदर्शकः केउकरे अद्भुतकार्याकारित्वात् केतुः-चिह्नं, 'नरपवरे' नराः प्रवराः यस्येतिकृत्वा, 'पुरिसवरे' पुरुषाणां मध्ये वरत्वात्, 'पुरिससीहे' शूरत्वात्, 'पुरिसआसीविसे' शापसमर्थत्वात्, 'पुरिसपुंडरीए' सेव्यत्वात्, 'पुरिसवरगंधहत्थी' प्रतिराज- गजभञ्जकत्वात् 'अड्ढे' आढ्यः 'दित्ते' दर्पवान् 'वित्ते' प्रतीतः 'विच्छिन्नविउलभवणसयणा- सणजाणवाहणाइन्ने' विस्तीर्णविपुलानि-अतिविस्तीर्णानि भवनशयनासनानि यस्य स तथा यानवाहनान्याकीर्णानि-गुणवन्ति यस्य स तथा ततः कर्मधारयः, 'बहुधणबहुजायरूवरयए' बहु धनं-गणिमादिकं बहुनी च जातरूपरजते यस्य स तथा,

'-आयोगपयोगसंपउत्ते' आयोगस्य-अर्थलाभस्य प्रयोगा-उपायाः संप्रयुक्ता-व्यापारिता येन स तथा 'विच्छड्डियपउरभत्तपाणे' विच्छर्दिते-त्यक्ते बहुजनभोजनदानेनावशिष्टोच्छिष्टसंभ- वात् संजातविच्छेदे वा नानाविधभक्तिके भक्तपाने यस्य स तथा 'बहुदासीदासगोमहिसगवेल- गप्पभूए' बहुदासीदासश्चासौ गोमहिषीगवेलगप्रभूतश्चेति समासः, गवेलका-उरभ्राः, 'पडिपुण्णजंतकोसकोट्ठगाराउहगारे' यन्त्राणि-पाषाणक्षेपयन्त्रादीनि कोशो-भाण्डागारं

कोष्ठागारं—धान्यगृहं आयुधागारं-प्रहरणशाला, [illegible] प्रत्यमित्राः—प्रातिवेशिकाः, 'ओहयकंटयं निहयकंटयं गलियकंटयं उद्धियकंटयं अकंटयं' कण्टकाः—प्रतिस्पर्द्धिनो गोत्रजाः उपहता विनाशनेन निहताः समृद्धयपहारेण गलिताः मानभङ्गेन उद्धृता देशनिर्वासनेन अत एवाकण्टकमिति, एवं 'उवहयसत्तु'मित्यादि, नवरं शत्रवो गोत्रजा इति,

'ववगयदुब्भिक्खमारिभयविप्पमुक्कं खेमं सिवं सुभिक्खं पसंतडिंबडमरं' अन्वय-व्यतिरेकाभिधानस्य शिष्टसंमतत्वाल पुनरुक्ततादोषोऽत्र 'रज्जं पसाहेमाणे विहरइ'त्ति। 'जाया' इति हे जात ! पुत्र 'किं दलयामो'त्ति भवतोऽभिमतं किं विघटयामविनाशयाम इत्यर्थः, अथवा भवतोऽभिमतेभ्याः किं दद्मः, तथा भवते एव किं प्रयच्छामः ?, 'किं वा ते हियइच्छिय- सामत्थे'त्ति को वा तव हृदयवाञ्छितो मन्त्र इति 'कुत्तियावणाउ'त्ति देवताधिष्ठितत्वेन स्वर्गमर्त्यपाताललक्षणभूत्रि- तयसंभविवस्तुसंपादक आपणो— हट्टः कुत्रिकापणः तस्मात् आनीतं काश्यपकं च—नापितं शब्दितुं—आकारितुमिच्छामीति वर्तते, श्रीगृहात्—भाण्डागारात् 'निक्केसे' सर्वथा विगतमलान् 'पोत्तियाइ'त्ति वस्त्रेणं 'महरिहे' त्यादि, 'महरिहेणं'ति महतां योग्येन महापूजने वा हंसस्येव लक्षणं—स्वरूपं शुक्लता हंसा वा लक्षणं—चिह्नं यस्य स तथा तेन शाटको—वस्त्रमात्रं स च पृथुलः पटोऽभिधीयत इति पटशाटकस्तेन 'सिंदुवारे'त्ति वृक्षविशेषो निर्गुण्डीति केचित् तत्कुसुमानि सिन्दुवाराणि तानि च शुक्लानि।

'एस णं'ति एतत् दर्शनमिति योगः णमित्यलंकारे, अभ्युदयेषु—राज्यलाभादिषु उत्सवेषुप्रियसमागमादिमहेषु प्रसवेषु—पुत्रजन्मसु तिथिषु—मदनत्रयोदशीप्रभृतिषु क्षणेषु—इन्द्रमहादिषु यज्ञेषु—नागादिपूजासु पर्वणीषु च—कार्त्तिक्यादिषु अपश्चिमं—अकारस्यामङ्गलप-रिहारार्थत्वात् पश्चिमं दर्शनं भविष्यति, एतत्केशदर्शनपनीतकेशावस्थस्य मेघकुमारस्य यद्दर्शनं सर्वदर्शनपाश्चात्यं तद्भविष्यतीति भावः, अथवा न पश्चिममपश्चिमं—पौनःपुन्येन मेघकुमारस्य दर्शनमेतद्दर्शनेन भविष्यतीत्यर्थः।

'उत्तरावक्कमणं'ति उत्तरस्यां दिश्यपक्रमणं—अवतरणं यस्मात्तदुत्तराप्रक्रमणं—उत्तराभिमुखं राज्याभिषेककाले पूर्वाभिमुखं तदासीदिति, 'दोच्चंपि' द्विरपि 'तच्चंपि' त्रिपपि 'श्वेतपीतैः' रजतसौवर्णैः 'पायपलंबं'ति पादौ यावद् यः प्रलम्बतेऽलङ्कारविशेषः स पादप्रलम्बः, 'तुडियाइं'ति बाहुरक्षकाः,केयूराङ्गदयोर्यद्यपि नामकोशे बाह्वाभरणतया न विशेषः तथापीहाकारभेदेन भेदो दृश्यः, 'दशमुद्रिकानन्तकं' हस्ताङ्गुलिसंबन्धि मुद्रिकादशक 'सुमणदामं'ति पुष्पमालां पिनह्यतः—परिधत्तः दर्दरः—चीवरावनद्धकुण्डिकादिभाजनमुखं तेन गालितास्तत्र पक्का वा ये 'मलय'त्ति मलयोद्भवं श्रीखण्डं तत्संबन्धिःसुगन्धयो—गन्धास्तान् पिनह्यतः, हारादिस्वरूपं प्राग्वत्,

ग्रन्थिमं—यद्ग्रथ्यते सूत्रादिना वेष्टिमं—यद्ग्रथितं सद्वेष्ट्यते यथा पुष्पलम्बूसकः गेन्दुक इत्यर्थः, पूरिमं—येन वंशशलाकामयपञ्जरकादि कूर्चादि वा पूर्यते सांघातिमं—यत्परस्परतो नालसंघातनेन संघात्यते अलङ्कृतं कृतालङ्कारं, विभूषितं—जातविभूषं।

'सद्दावेह जाव सद्दावेंति' 'एगा वरतरुणी'त्यादि शृङ्गारस्यागारमिव शृङ्गारागारं अथवा शृङ्गारप्रधान आकारो यस्याश्चारुश्च वेषो यस्याः सा तथा, सङ्गतेषु गतादिषु निपुणा युक्तेषूपचारेषु कुशला च या सा तथा, तत्र विलासो—नेत्रविकारो, यदाह—

॥ १ ॥ "हावो मुखविकारः स्याद्भावश्चित्तसमुद्भवः ।
विलासो नेत्रजो ज्ञेयो, विभ्रमो भ्रूसमुद्भवः ॥"

–संलापो–मिथो भाषा उल्लापः–काकुवर्णनं, आह च–

॥ १ ॥ "अनुलापो मुहुर्भाषा, प्रलापोऽनर्थकं वचः ।
काक्वा वर्णनमुल्लापः, संलापो भाषणं मिथः ॥" इति ।

'आमेलग'त्ति आपीडः–शेखरः स च स्तनः–प्रस्तावाच्चुचुकस्तत्प्रधानौ आमेलकौ वा–परस्परमीषत्सम्बद्धौ यमलौ–समश्रेणिस्थितौ युगलौ–युगलरूपौ द्वावित्यर्थः वर्त्तितौ–वृत्तौ अभ्युन्नतौ–उचौ पीनौ–स्थूलौ रतिदौ-सुखप्रदौ संस्थितौ–विशिष्टसंस्थानवन्तौ पयोधरौ–स्तनौ [illegible]ताः सा तथा, [illegible] षामिव प्रकाशो यस्य तत्तथा, सकोरेण्टा-नपि–कोरेण्टकपुष्पगुच्छयुक्तानि माल्यदामानि–पुष्पमाला यत्र तत्तथा, धवलमातपत्रं–छत्रं, नानामणिकनकरत्नानां महार्हस्य महार्थस्य तपनीयस्य च सत्काबुज्ज्वलौ विचित्रौ दण्डौ ययोस्ते तथा, अत्र कनकतपनीययोः को विशेषः ?, उच्यते,-

कनकं पीतं तपनीयं रक्तं इति, 'चिल्लियाओ' त्ति दीप्यमाने लीने इत्येकेसूक्ष्मवरदीर्घवाले शङ्खकुन्ददकरजसां अमृतस्य मथितस्य सतो यः फेनपुंजस्तस्य च सन्निकाशे–सदृशे ये ते तथा, चामरे चन्द्रप्रभवज्रवैडूर्यविमलदण्डे, इह चन्द्रप्रभः–चन्द्रकान्तमणिः, तालवृन्त–व्यजनविशेषः मत्तगजमहामुखस्य आकृत्या–आकारेण समानः–सदृशो यः स तथा तं भृङ्गारं, 'एगे'त्यादि, एकः–सदृशः आभरणलक्षणो गृहीतो निर्योगः–परिकरो यैस्ते तथा तेषां कौटुम्बिकवरतरुणानां सहमिति ।

'तए णं ते कोडुंबियवरतरुणपुरिसा सद्दाविय'त्ति शब्दिताः 'समाण'त्ति सन्तः, 'अट्ठट्ठ-मंगलय'त्ति अष्टावष्टाविति वीप्सायां द्विर्वचनं मङ्गलकानि–माङ्गल्यवस्तूनि, अन्ये त्वाहुः–अष्टसंख्यानि अष्टमङ्गलसंज्ञानि वस्तूनिति 'तप्पढमयाए' त्ति तेषां विवक्षितानां मध्ये प्रथमता तत्प्रथमता तया 'वद्धमाणयं'ति शरावं, पुरुषारूढः पुरुष इत्यन्ये, स्वस्तिकपञ्चकमित्यन्ये, प्रासादविशेष इत्यन्ये 'दप्पण'त्ति आदर्शः, इह वाचनान्तरे दृश्यं–'तयानंतरं च णं पुण्णकल-सभिंगारा दिव्वा य छत्तपडागा सचामरा दंसणरइय आलोइयदरिसणिज्जा वाउद्धुयविजयंती य ऊसिया गगनतलमनुलिहंती पुरओ अहानुपुव्विए संपट्ठिया,

–तयानंतरं च वेरुलियाभिसंतविमलदंडं पलंबकोरेंटमल्लदामोवसोहियं चंदमंडलनिभं विमलं आयवत्तं पवरं सीहासणं च मणिरयणपायपीढं सपाउयाजोयसमाउत्तं बहुकंकरकम्मकरपुरिस-पायत्तपरिखित्तं पुरओ अहानुपुव्विए संपट्ठियं, तयानंतरं च णं बहवे लट्ठिग्गाहा कुंतग्गाहा चावग्गाहा धयग्गाहा चामरग्गाहा कुमरग्गाहा पोत्थयग्गाहा फलयग्गाहा पीढयग्गाहा वीणग्गाहा कूवग्गाहा हडप्फग्गाहा पुरओ अहानुपुव्वीए संपट्ठिया, तयानंतरं च णं बहवे दंडिणो मुंडिणो सिहंडिओ पिंछिणो हासकरा डमरकरा चाडुकरा कीडंता य वायंता य गायंता य नच्चंता य हासंता य सोहिंता य साविंता य रक्खंता य आलोयं च करेमाणा जयजयसद्दं च पउंजमाणा पुरओ अहानुपुव्विए संपट्ठिया,

तयाणंतरं च णं जच्चाणं तरमल्लिहायणाणं थासगअहिलाणाणं चामरगंडपरिमंडियकडीणं अट्ठसयं वरतुरगाणं पुरओ अहाणुपुव्विए संपट्ठियं, तयानंतरं च णं ईसिदन्ताणं ईसिमत्ताणं ईसिउच्छंगविसालधवलदंताणं कंचणकोसिपविट्ठदंताणं अट्ठसयं गयाणं पुरओ अहानुपुव्वीए संपट्ठियं, तयानंतरं च णं सछत्ताणं सज्झयाणं सघंटाणं सपडागाणं सतोरणवराणं सनंदिघोसाणं सखिंखिणीजालपरिखित्ताणं हेममयचित्ततिणिसकणकनिज्जुत्तदारुयाणं कालायससुकय-नेमिजंतकम्माणं सुसिलिट्ठवित्तमंडलधुराणं आइण्णवरतुरगसंपउत्ताणं कुसलनरछेयसारहिसुसं-परिग्गहियाणं बत्तीसतोणपरिमंडियाणं सकंकडवडंसकाणं सचावसरपहरणावरणभरियजुद्धसज्जाणं अट्ठसयं रहाणं पुरओ अहानुपुव्वीए संपट्ठियं, तयानंतरं च णं असिसत्तिकोंततोमरसूल लउडभिंडिमालधणुपाणिसज्जं पायत्ताणीयं पुरओ अहाणुपुव्वीए संपट्ठियं,

तए णं से मेहे कुमारे हारोत्थयसुकयरइयवच्छे कुंडलुज्जोइयाणणे मउडदित्तसिरए अब्भहियरायतेयलच्छीए दिप्पमाणे सकोरेंटमल्लदामेणं छत्तेणं धरिज्जमाणेणं सेयवरचामराहिं उद्धुव्वमाणीहिं हयगयपवरजोहकलियाए चाउरंगिणीए सेनाए समणुगम्माणमग्गे जेणेव गुणसिलए चेइए तेणेव पहारेत्थ गमणाए, तए णं तस्स मेहस्स कुमारस्स पुरओ महं आसा आसधरा उभओ पासे नागा नागधरा करिवरा पिट्ठओ रहा रहसंगेल्ली,

तए णं से मेहे कुमारे अब्भागयभिंगारे पग्गहियतालियंटे ऊसवियसेयच्छत्ते पवीजियबालवियणीए सव्विड्ढीए सव्वजुईए सव्वबलेणं सव्वसमुदएणं सव्वादरेणं सव्वविभूईए सव्वविभूसाए सव्वसंभमेणं सव्वगंधपुप्फमल्लालंकारेण सव्वतुडियसद्दसन्निनाएणं महया इड्ढीए महया जुईए महया बलेणं महया समुदएणं महया वरतुडियजमगसमगपवाएणं संखपणवपडहभेरिझल्लरिख-रमुहिहुडुक्कमुरवमुइंगदुंदुभिनिग्घोसनाइयरवेणं रायगिहस्स नगरस्स मज्झंमज्झेणं णिग्गच्छइ,

तए णं तस्स मेहस्स कुमारस्स रायगिहस्स नगरस्स मज्झंमज्झेणं निग्गच्छमाणस्स बहवे अत्थत्थिया कामत्थिया भोगत्थिया लाभत्थिया किब्बिसिया करोडिया कारवाहिया संखिया चक्किया लंगलिया मुहमंगलिया पूसमाणवा वद्धमाणगा ताहिं इट्ठाहिं कंताहिं पियाहिं मणुन्नाहिं मणामाहिं मणाभिरामाहिं हिययगमणिज्जाहिं वग्गूहिं'ति, अयमस्यार्थः—तदनन्तरं च छत्रस्योपरि पताका छत्रपताका सचामरा—चामरोपशोभिता तथा दर्शनरतिदा दृष्टिसुखदा आलोके—दृष्टिविषये क्षेत्रे स्थिताऽत्युच्चतया दृश्यते या सा आलोकदर्शनीया, ततः कर्मधारयः, अथवा दर्शने दृष्टिपथे मेघकुमारस्य रचिता—धृता या आलोकदर्शनीया च या सा तथा, वातोद्धूता विजयसूचिका च या वैजयन्ती—पताकाविशेषः सा तथा,

सा च ऊसिया—उच्छ्रिता ऊर्द्ध्वीकृता पुरतः—अग्रतः यथानुपूर्वी—क्रमेण सम्प्रस्थिता—प्रचलिता, 'भिसंत'त्ति दीप्यमानः, मणिरत्नानां सम्बन्धि पादपीठं यस्य सिंहासनस्य तत्तथा, स्वेन—स्वकीयेन मेघकुमारसम्बन्धिना पादुकायोगेन समायुक्तं यत्तत्तथा, बहुभिः किङ्करैः—किंकुर्वाणैः कर्मकरपुरुषैः पादातेन च—पदातिसमूहेन शस्त्रपाणिना परिक्षिप्तं यत्तत्तथा 'कूय'त्ति कुतुपः 'हडप्फो'त्ति आभरणकरण्डकं 'मुंडिणो' मुण्डिताः 'छिडिणो' शिखावन्तः 'डमरकराः' परस्परेण कलहविधायकाः 'चाटुकराः' प्रियंवदा 'सोहंता य'त्ति शोभां कुर्वन्तः 'सावंता य' त्ति श्रावयन्तः आशीर्वचनानि रक्षन्तः न्यायं आलोकं च कुर्वाणाः—मेघकुमारं तत्समृद्धिं च पश्यन्तः, जात्यानां—

काम्बोजादिदेशोद्भवानां तरोमल्लिनो—बलाधायिनो वेगाधायिनो वा हायनाः-संवत्सरा येषां ते तथा तेषां, अन्ये तु 'भायल'त्ति मन्येते तत्र भायला- जात्यविशेषा एवेति गमनिकैवैषा, पासका- दर्पणकाराः अहिलाणानि च -कविकानि येषांसन्ति ते तथा मतुब्लोपात् 'चामरगंडा' चामरदण्णस्तैः परिमणिता कटी येषां ते तथा तेषांईषद्दान्तानां—मनाग्ग्राहितशिक्षाणामीषन्मत्तानां—नातिमत्तानां, ते हि जनमुपद्रवयन्तीति, ईषत्—मनागुत्सङ्गः इवोत्सङ्गः—पृष्ठिशस्तत्र विशाला—विस्तीर्णा धवलदन्ताश्च येषां ते तथा तेषां, कोशी—प्रतिमा, नन्दिघोषः तूर्यनादः, अथवा सुनंदी सत्समृद्धिको घोषो येषां ते तथा तेषां,

सकिङ्किणि—सक्षुद्रघण्टिकं यज्जालं—मुक्ताफलादिमयं तेन परिक्षिप्ता ये ते तथा तेषां, तथा हैमवतानि—हिमवत्पर्वतोद्भवानि चित्राणि तिनिशस्य—वृक्षविशेषस्य सम्बन्धीनि कनकनि- युक्तानि—हेमखचितानि दारूणि—काष्ठानि येषां ते तथा तेषां, कालयसेन—लोहविशेषेण सुष्ठु कृतं नेमेः—गण्डमालायाः यन्त्राणां च—रथोपकरणविशेषाणां कर्म्म येषां ते तथा तेषां, सुश्लिष्टे वित्ति—वत्रदण्डवत् मण्डले वृत्ते धुरी येषां ते तथा तेषां, आकीर्णा—वेगादिगुणयुक्ताः ये वरतुरगास्ते संप्रयुक्ता—योजिता येषु ते तथा तेषां,

कुशलनाराणां मध्ये ये छेकाः—दक्षाः सारथयस्तैः सुसंप्रगृहीता ये ते तथा तेषां, तोणत्ति—शरभस्त्राः सह कण्टकैः—कवचैर्वर्शैश्च वर्तन्ते ये ते तथा तेषां, सचापाः—धनुर्युक्ता ये शराः प्रहरणानि च—खड्गादीनि आवरणानि च—शीर्षकादीनि तैर्ये भृता युद्धसज्जाश्च—युद्धप्रगुणाश्च ये ते तथा तेषां, 'लउड'त्ति लकुटाः अस्यादिकानि पाणौ हस्ते यस्य तत्तथा तच्च तत्सज्जं च—प्रगुणं युद्धस्येति गम्यते, पादातानीकं—पदातिकटकंहारावस्तृतं सुकृतरतिकं विहितसुखं वक्षो यस्य स तथा, मुकुटदीप्तशिरस्कः, 'पहारेत्थ गमणयाए'त्ति गमनाय प्रधारितवान्—संप्रधारितवान्, 'मह'त्ति महान्तः अश्वाः, अश्वधराः ये अश्वान् धारयन्ति, नागा—हस्तिनः, नागधरा ये हस्तिनो धारयन्ति, क्वचिद्वरा इति पाठः, तत्राश्वा नागाश्च किंविधाः ? —अश्ववरा अश्वप्रधानाः एवं नागवराः, तथा रथा रथसंगिणेल्ली—रथमाला क्वचित् रहसंगेल्लीति पाठः तत्र रथसङ्गेल्ली—रथसमूहः ।

'तए णं से मेहे कुमारे अब्भागयभिंगारे इत्यादिवर्णकोपसंहारवचनमिति न पुनरुक्तं 'सव्विड्ढीए'त्यादि दोहदावसरे व्याख्यातं, शङ्खः प्रतीतः, पणवो—भाण्डानां पटहः पटहस्तु प्रतीत एव भेरी—ढक्काकारा झल्लरी—वलयाकार खरमुहीव्काहला हुडुक्का—प्रतीता महाप्रमाणो मद्दलो मुरजः स एव लघुर्मृदङ्गो दुन्दुभिः—भेर्याकारा सङ्कटमुखी एतेषांनिर्घोषो—महाध्वानो नादितं च—घण्टायामिव वादनोत्तरकालभावी स तथा तद्ध्वनिस्तल्लक्षणो यो रवस्तेन, अर्थार्थिनो—द्रव्यार्थिनः कामार्थिनः—शब्दरूपार्थिनः लाभार्थिनः—सामान्येन लाभेप्सवः किल्बिषिकाः—पातकफलवंतो निःस्वान्धपङ्ग्वादयः कारोटिकाः—कापालिकाः करो—राजदेयं द्रव्यं तद्वहन्ति ये ते कारवाहिकाः करेण वा बाधिताः—पीडिता ये ते करबाधिताः, शंखवादनशिल्पमेषामिति शाङ्खिकाः शङ्खो वा विद्यते येषां मङ्गल्यचन्दनाधारभूतः ते शाङ्खिकाः, चक्रं प्रहरणमेषामिति चाक्रिकाः—योद्धारः चक्रं वाऽस्ति येषां ते चाक्रिकाः—कुम्भकारतैलिकादयः चक्रं वोपदर्श्य याचन्ते ये ते चाक्रिकाः चक्रधरा इत्यर्थः, लाङ्गलिकाः—हालिकाः लाङ्गलं वा प्रहरणं येषां गले वा लम्बमानं सुवर्णादिमयं तद्येषां ते लाङ्गलिकाः—कार्पटिकविशेषाः, मुखमङ्गलानि—चाटुवचनानि ये कुर्वन्ति ते मुखमङ्गलिकाः,

पुष्पमाणवा—नग्नाचार्या वर्द्धमानकाःस्कन्धारोपितपुरुषः, 'इट्ठाही'त्यादि पूर्ववत्,' 'जियविग्घोविय वसाहि'त्ति इहैव सम्बन्धः, अपि च जितविघ्नः त्वं हे देव ! अथवा देवानां सिद्धेश्च मध्ये वसजास्व, 'निहणाहि'त्ति विनाशय रागद्वेषी मल्ली, केन करणभूतेनेत्याह– तपसा–अनशनादिना, किंभूतः सन् ? –धृत्या–चित्तस्वास्थ्येन 'धणियं'ति अत्यर्थं पाठान्तरेण बलिका–दृढ बद्धा क्षा येन स तथा,

मल्लं हि प्रतिमल्लो मुष्ट्यादिना करणेन वस्त्रादिदृढबद्धकक्षः सन्निहन्तीति एवमुक्तमिति, तथा मर्दय अष्टौ कर्मशत्रून ध्यानेनोत्तमेन–शुक्लेनाप्रमत्तः सन्, तथा 'पावय'त्ति प्राप्नुहि वितिमिरं–अपगताज्ञानतिमिरपटलं नास्मादुत्तरमस्तीति अनुत्तरं–केवलज्ञानं, गच्छ च मोक्षं परं पदं शाश्वतमचलं चेत्येवं चकारस्य सम्बन्धः, किं कृत्वा ? –हत्वा परीषहचमूं–परीषहसैन्यं, णमित्यलंकारे अथवा किंभूतस्त्वं ? –हन्ता–विनाशकः परीषहचमूनां ।

*मू. (३४) तते णं तस्स मेहस्स कुमारस्स अम्मापियरो मेहं कुमारं पुरओ कट्टु जेणामेव समणे भगवं महावीरे तेणामेव उवागच्छंति २ त्ता समणं भगवं महावीरं तिक्खुत्तो आयाहिणं पयाहिणं करेंति २ त्ता वंदंति नमंसंति २ त्ता एवं वदासी– एस णं देवाणुप्पिया ! मेहे कुमारे अम्हं एगे पुत्ते इट्ठे कंते जाव जीवियाउसासए हिययणंदिजणए उंबरपुप्फंपिव दुल्लहे सवणयाए किमंग पुण दरिसणयाए ?, से जहा नामए उप्पलेति वा पउमेति वा कुमुदेति वा पंके जाए जले संवड्ढिए नोवलिप्पइ पंकरएणं नोवलिप्पइ जलरएणं एवामेव मेहे कुमारे कामेसु जाए भोगेसु संवुड्ढे नोवलिप्पति कामरएणं नोवलिप्पति भोगरएणं,*

*एस णं देवाणुप्पिया ! संसारभउव्विगे भीए जम्मणजरमरणाणं इच्छइ देवाणुप्पियाणं अंतिए मुंडे भवित्ता आगाराओ अनगारियं पव्वतित्तए, अम्हे णं देवाणु० सिस्सभिक्खं दलयामो, पडिच्छंतु णं देवाणु० ! सिस्सभिक्खं, तते णं से समणे भगवं महावीरे मेहस्स कु० अम्मापिऊएहिं एवं वुत्ते समाणे एयमट्ठं सम्मं पडिसुणेति, तते णं से मेहे कुमारे समणस्स भगवओ महा० अंतियाओ उत्तरपुच्छिमं दिसिभागं अवक्कमति २ त्ता सयमेव आभरणमल्लालंकारं ओमुयति,*

*तते णं से मेकुमारस्स माया हंसलक्खणेणं पडसाडएणं आभरणमल्लालंकारं पडिच्छति २ हारवारिधारसिंदुवारछिन्नमुत्तावलिपगासातिं अंसूणि विणिम्मुयमाणी २ रोयमाणी २ कंदमाणी २ विलवमाणी २ एवं वदासी– जतियव्वं जाया ! घडियव्वं जाया ! परक्कमियव्वं जाया ! अस्सिं च णं अट्ठे नो पमादेयव्वं अम्हंपि णं एमेव मग्गे भवउत्तिकट्टु मेहस्स कुमारस्स अम्मापियरो समणं भगवं महावीरं वंदंति नमंसंति २ जामेव दिसिं पाउब्भूता तामेव दिसिं पडिगया ।*

वृ. 'एगे पुत्ते'इति धारिण्यपेक्षया, श्रेणिकस्य बहुपुत्रत्वात्, जीवितोच्छ्वासकः हृदयनंदिजनकः, उत्पलमिति वा–नीलोत्पलं पद्ममिति वा–आदित्यबोध्यं कुमुदमिति वा–चन्द्रबोध्यं

'जइयव्व'मित्यादि, प्राप्तेषु संचमयोगेषु यत्नः कार्यो हे जात !–पुत्र ! घटितव्यं–अप्राप्तेषु घटना कार्या पराक्रमितव्यं च–पराकारमः कार्यः, पुरुषत्वाभिमानः सिद्धफलः कर्तव्य इति भावः किमुक्तं भवित ? –एतस्मिन्नर्थे प्रव्रज्यापालनलक्षणे न प्रमादयितव्यमिति ।

*मू. (३५) तते णं से मेहे कुमारे सयमेव पंचमुट्ठियं लोयं करेति २ जेणामेव समणे तेणामेव उवागच्छति २ समणं भगवं मगावीरं तिक्खुत्तो आयाहिणं पयाहिणं करेति २ वंदी*

*नमंसति २ एवं वदासी आलित्ते णं भंते ! लोए पलित्ते णं भंते ! लोए आलित्तपलित्ते णं भंते ! लोए जराए मरणेण य, से जहानामए केई गाहावती आगारंसि झियायमाणंसि जे तत्थ भंडे भयति अप्पभारे मोल्लगुरुए तं गहाय आयाए एगंतं अवक्कमति एस मे नित्थारिए समाणे पच्छा पुरा हियाए सुहाए खमाए निस्सेसाए आणुगामियत्तिए भविस्सति एवामेव ममवि एगे आयाभंडे इट्ठे कंते पिए मणुन्ने मणामे एस मे नित्थारिए समाणे संसारवोच्छेयकरे भविस्सति तं इच्छामि णं देवाणुप्पियाहिं सयमेव पव्वावियं सयमेव मुंडावियं सेहावियं सिक्खावियं सयमेव आयारगोयरविनयवेणइय- चरणकरणजायामायावत्तियं धम्ममाइक्खियं,*

*तते णं समणे भगवं महावीरे मेहं कुमारं सयमेव पव्वावेति सयमेव आयारजाव धम्ममातिक्खइ—एवं देवाणुप्पिया ! गंतव्वं चिट्ठितव्वं निसीयव्वं तुयट्टियव्वं भुंजियव्वं भासियव्वं एवं उट्ठाए उट्ठाय पाणेहिं भूतेहिं जीवेहिं सत्तेहिं संजमेणं संजमितव्वं अस्सिं च णं अट्ठे नो पमादेयव्वं,*

*तते णं से मेहे कुमारे समणस्स भगवओ महावीरस्स अंतिए इमं एयारूवं धम्मियं उवएसं निसम्म सम्मं पडिवज्जइ तमाणाए तह गच्छइ तए चिट्ठइ जाव उट्ठाए उट्ठाय पाणेहिं भूतेहिं जीवेहिं सत्तेहिं संजमइ*

**वृ.** आदीप्त—ईषद्दीप्तः प्रदीप्तः—प्रकर्षेण दीप्त आदीप्तप्रदीप्तोऽत्यन्तप्रदीप्त इति भावः, 'गाहावइ'त्ति गृहपतिः, 'झियायमाणंसि' त्ति ध्यायमाने भाण्डं—पण्यं हिरण्यादि अल्पभारं पाठान्तरे अल्पं च तत्सारं चेत्यल्पसारं मूल्यगुरुकं, 'आयाए' त्ति आत्मना 'पच्छा पुरा य' त्ति पश्चादागामिनि काले पुरा च पर्वमिदानीमेव लोके—जीवालोके अथवा पश्चाल्लोके—आगामिजन्मनि पुरालोके—इहैव जन्मनि, पाठान्तरे 'पच्छाउरस्स' त्ति पश्चादग्निभयोत्तरकालं आतुरस्य—बुभुक्षादिभिः पीडितस्येति

'एगे भंडे' त्ति एकं—अद्वितीयं भाण्डमिव भाण्डं 'सयमेवे' त्यादि स्वयमेव प्रव्राजितं वेषदानेन आत्मानं इति गम्यते भावे वा क्तः प्रत्ययः प्रव्राजनमित्यर्थः मुण्डितं शिरोलोचेन सेधितं—निष्पादितं करणप्रत्युपेक्षणादिग्राहणतः, शिक्षितं सूत्रार्थग्राहणतः, आचारो—ज्ञानादिविषयमनुष्ठानं कालाध्ययनादि गोचरो—भिक्षाटनं विनयः—प्रतीतो वैनयिकं—तत्फलं कर्म्मक्षयादि चरणं—व्रतादि करणं—पिण्डविशुध्यादि यात्रा—संयमयात्रा मात्रा—तदर्थमेवाहारमात्रा ततो द्वन्द्वः तत एषामाचारादीनां वृत्तिः—वर्त्तनं यस्मिन्नसौ आचारगोचरविनयवैनयिकचरणकरणयात्रा-मात्रावृत्तिकस्तं धर्म्ममाख्यातं—अभिहितं,

ततः श्रमणो भगवान् महावीरः स्वयमेव प्रव्राजयति यावत् धर्म्ममाख्याति, कथमित्याह—एवं गन्तव्यं—युगमात्रभून्यस्तदृष्टिनेत्यर्थः, 'एवं चिट्ठियव्वं' ति शुद्धभूमौ ऊर्द्धवअधस्थानेन स्थातव्यं, एवं निषीदितव्यं—उपवेष्टव्यं संदंशकभूमिप्रमार्जनादिन्यायेनेत्यर्थः, एवं त्वग्वर्त्तितव्यं—शयनीयसामायिकाद्युच्चारणापूर्वकं शरीरप्रमार्जनां विधाय संस्तारकोत्तरपट्टयोर्बाहूपधानेन वामपार्श्वत इत्यादिना न्यायेनेत्यर्थः, भोक्तव्यं—वेदनादिकारणतो अङ्गारादिदोषहितमित्यर्थः भाषितव्यं—हितमितमधुरादिविशेषणतः, एवमुत्थायोत्थायप्रमादनिद्राव्यपोहेन विबुध्य २ प्राणादिषु विषयेषुसंयमो—रक्षा तेन संयंतव्यम्—संयतितव्यमिति, तत्र—

॥१॥ "प्राणा द्वित्रिचतुः प्रोक्ताः, भूतास्तु तरवः स्मृताः ।
जीवाः पञ्चेन्द्रिया ज्ञेयाः, शेषाः सत्त्वा उदीरिताः ॥"

किं बहुना ? –अस्मिन् प्राणादिसंयमे न प्रमादयितव्यमुद्यम एव कार्य इत्यर्थः ।

*मू. (३६) जं दिवसं च णं मेहे कुमारे मुंडे भवित्ता आगाराओ अणगारियं पव्वइए तस्स णं दिवसस्स पुव्वावरण्हकालसमयंसि समणाणं निग्गंथाणं अहाराइणियए सेज्जासंथारएसु विभज्ज-माणेसु मेहकुमारस्स दारमूले सेज्जासंथारए जाए यावि होत्था, तते णं समणा निग्गंथा पुव्वरत्तावरत्त-कालसमयंसि वायणाए पुच्छणाए परियट्टणाए धम्माणुजोगचिंताए य उच्चारस्स य पासवणस्स य अइगच्छमाणा य निगच्छमाणा य अप्पेगतिया मेहं कुमारं हत्थेहिं संघट्टंति एवं पाएहिं सीसे पोट्टे कायंसि अप्पेगतिया ओलंडेति अप्पेगइया पोलंडेइ अप्पेगतिया पायरयरेणुगुंडियं करेंति,*

*एवंमहालियं च णं रयणीं मेहे कुमारे नो संचाएति खणमवि अच्छिं निमीलित्तए, तते णं तस्स मेहस्स कुमारस्स अयमेयारूवे अब्भत्थिए जाव समुप्पज्जित्था–एवं खलु अहं सेणियस्स रन्नो पुत्ते धारिणीए देवीए अत्तए मेहे जाव समणयाए तं जया णं अहं अगारमज्झे वसामि तया णं मम समणा निग्गंथा आढायंति परिजाणंति सक्कारेंति सम्माणेंति अट्ठाइं हेऊतिं पसिणाति कारणाइं आतिक्खंति इट्ठाहिं कंताहिं वग्गूहिं आलवेंते संलवेंति,*

*जप्पभितिं च णं अहं मुंडे भवित्ता आगाराओ अनगारियं पव्वइए तप्पभितिं च णं मम समणा नो आढायंति जाव नो संलवंति, अदुत्तरं च णं मम समणा निग्गंथा राओ पुव्वरत्तावरत्त-कालसमयंसि वायणाए पुच्छणाए जाव महालियंच णं रत्ति नो संचाएमि अच्छिं निमिलावेत्तए,*

*तं सेयं खलु मज्झं कल्लं पाउप्पभायाए रयणीए जाव तेयसा जलंते समणं भगवं महावीरं आपुच्छित्ता पुनरवि आगारमज्झे वसित्तएत्तिकट्टु एवं संपेहेति २ अट्टदुहट्टवसट्टमाणसगए निरयपडिरूवियं च णं तं रयणिं खवेंति २ कतल्लं पाउप्पभायाए सुविमलाए रयणीए जाव तेयसा जलंते जेणेव समणे भगवं० तेणामेव उवागच्छति २ तिखुत्तो आदाहिणं पदाहिणं करेइ २ वंदइ नमंसइ २ जाव पज्जुवासइ ।*

वृ. प्रत्यपराह्णकालसमयो–विकालः, 'अहाराइणियाए' त्ति यथारत्नाधिकतया यथाज्येष्ठ-मित्यर्थः, शय्या–शयनं तदर्थं संस्तारकभूमयः" अथवा शय्यायां–वसतौ संस्तारकाः- शय्यासंस्ता-रकाः, वाचनायै–वाचनार्थं धर्मार्थमननुयोगस्य–व्याख्यानस्य चिन्ता धर्मानुयोगस्य वा–धर्मव्या-ख्यानस्य चिन्ता धर्मानुयोगचिन्ता तस्यै अतिगच्छन्तःप्रविशन्तो निर्गच्छन्तश्चालयादिति गम्यते, 'ओलंडिंति' त्ति उल्लङ्घयंति 'पोलंडेन्ति' त्ति प्रकर्षेण द्विस्त्रिर्वोल्लघयंतीत्यर्थः, पादरजोलक्षणेन रेणुना पादरयाद्वा–तद्वेगात् रेणुना गुण्डितो यः स तथा तं कुर्वन्ति ।

'एवंमहालियं च णं रयणि' न्ति इतिमहतीं च रजनीं यावदिति शेषः, मेघकुमारो "नो संचाएति' त्ति न शक्नोति क्षणमप्यक्षि निमीलयितुं निद्राकरणायेति, आध्यात्मिकः–आत्मविषयश्चिन्तितः–स्मरणरूपः प्रार्थितः–अभिलाषात्मकः मनोगतः–मनस्येव वर्तते यो न बहिः स तथा सङ्कल्पो–विकल्पः समुत्पन्नः आगारमध्ये–गेहमध्ये वसामि–अधितिष्ठामि, पाठान्तरतो अगारमध्ये आवासामि, 'आढंति' आद्रियन्ते 'परिजानन्ति' यदुतायमेवंविध इति 'सक्कारयंति सत्कारयन्ति च वस्त्रादिभिरभ्यर्चयन्तीत्यर्थः 'सन्मानयन्ति' उचितप्रतिपत्तिकरणेन,

अर्थान्–जीवादीन् हेतून्–तद्गमकानन्वयव्यतिरेकलक्षणान् प्रश्नान्पर्युनुयोगान् कारणानि–उपपत्तिमात्राणि व्याकरणानि–परेण प्रश्ने कृते उत्तराणीत्यर्थः, आख्यान्ति–ईषत्

संलपन्ति-मुहुर्मुहुः, 'अदुत्तरं च णं'ति अथवा परं 'एवं संपेहेइ'त्ति संप्रेक्षते-पर्यालोचयति 'अट्टदुहट्ट-वट्टमाणसगए'ति आर्त्तेन-ध्यानविशेषेण दुःखार्त्त-दुःखपीडितं वशार्त्त-विकल्पवशमवपगतं यन्मानसं तद्गतः-प्राप्तो यः स तथा, निरयप्रतिरूपिकां च-नरकसदृशीं दुःखसाधर्म्यात् तां रजनीं क्षपयति-गमयति ।

*मू. (३७) तते णं मेहाति समणे भगवं महावीरे मेहं कुमारं एवं वदासी-से नूनं तुमं मेहा राओ पुव्वरत्तावरत्तकालसमयंसि समणेहिं निग्गंथेहिं वायणाए पुच्छणाए जाव महालियं च णं राइं नो संचाएमि मुहुत्तमवि अच्छिं निमिलावेत्तए,*

*तते णं तुब्भं मेहा! इमे एयारूवे अब्भत्थिए० समुप्पज्जित्था-जया णं अहं अगारमज्झे वसामि तया णं मम समणा निग्गंथा आढायंति जाव परियाणंति, जप्पभिइं च णं मुंडे भवित्ता आगाराओ अणगारियं पव्वयामि तप्पभितिं च णं मम समणा नो आढायंति जाव नो परियाणंति अदुत्तरं च णं समणा निग्गंथा राओ अप्पेगतिया वायणाए जाव पायरयरेणुगुंडियं करेंति,*

*तं सेयं खलु मम कल्लं पाउप्पभायाए समणं भगवं महावीरं आपुच्छित्ता पुनरवि आगारमज्झे आवसित्तएत्तिकट्टु एवं संपेहेसि २ अट्टदुहट्टवसट्टमाणसे जाव रयणीं खवेसि २ जेणामेव अहं तेणामेव हव्वमागए ?, से नूनं मेहा! एस अत्थे समट्ठे ?, हंता अत्थे समट्ठे,*

*एवं खलु मेहा! तुमं इओ तच्चे अईए भवग्गहणे वेयड्ढगिरिपायमूले वणयरेहिं निव्वत्तिय-नामधेज्जे सेते संखदलउज्जलविमलनिम्मलदहिघणगोखीरफेणरयणियरप्पयासे सत्तुस्सेहे नवायए दसपरिणाहे सत्तंगपतिट्ठिए सोमे समिए सुरूवे पुरतो उदग्गे समूसियसिरे सुहासणे पिट्ठओ वराओ अतियाकुच्छी अच्छिद्दकुच्छी अलंबकुच्छी पलंबलंबोदराहरकरे धणुपट्ठा- गिइविसिट्ठ पुट्ठे अल्लीणपमाणजुत्तवट्टियापीवरगत्तावरे अल्लीणपमाणजुत्तपुच्छे पडिपुन्नसुचारुकुम्मचलणे पंडुरसुविसुद्धनिद्धणिरुवहयविंसतिणहे छद्दंते सुमेरुप्पभे नामं हत्थिराया होत्था,*

*तत्थ णं तुमं मेहा! बहूहिं हत्थीहि य हत्थीणियाहि य लोट्टएहि य लोट्टियाहि य कलभेहि य कलभियाहि य सद्धिं संपरिवुडे हत्थिसहस्सणायए देसए पागट्ठी पट्ठवए जूहवई वंदपरियट्टए अन्नेसिं च बहूणं एकल्लाणं हत्थिकलभाणं आहेवच्चं जाव विहरसि,*

*तते णं तुमं मेहा! निच्चप्पमत्ते सइं पललिए कंदप्परई मोहणसीले अवितण्हे कामभोगतिसिए बहूहिं हत्थीहि य जाव संपरिवुडे वेयड्ढगिरिपायमूले गिरीसु य दरीसु य कुहरेसु य कंदरासु य उज्झरेसु य निज्झरेसु य वियरएसु य गड्डासु य पल्लवेसु य चिल्ललेसु य कडयेसु य कडयपल्ललेसु य तडीसु य वियडीसु य टंकेसु य कूडेसु य सिहरेसु य पब्भारसु य मंचेसु य मालेसु य काणणेसु य वनेसु य वनसंडेसु य वनराईसु य नदीसु य नदीकच्छेसु य जूहेसु य संगमेसु य वावीसु य पोक्खरिणीसु य दीहियासु य गुंजालियासु य सरेसु य सरपंतियासु य सरसरपंतियासु य वनयरएहिं दिन्नवियारे बहूहिं हत्थीहि य जाव सद्धिं संपरिवुडे बहुविहतरुपल्लवपउरपाणियतणे निब्भए निरुव्विग्गे सुहंसुहेणं विहरसि।*

*तते णं तुमं मेहा! अन्नया कयाई पाउसवरिसारत्तसरयहेमंतवसंतेसु कमेण पंचसु उऊसु समतिक्कंतेसु गिम्हकालसमयंसि जेट्ठामूलमासे पायवघंससमुट्ठिएणं सुक्कतणपत्तकयवरमा-रुतसंजोगदीविएणं महाभयंकरेणं हुयवहेणं वनदवजालासंपलित्तेसु वनंतेसु धूमाउलासु दिसासु*

महावायवेगेणं संघट्टिएसु छिन्नजालेसु आवयमाणेसु पोल्लरुक्खेसु अंतो २ झियायमाणेसु मयकुहितविनिविट्ठकिमियकद्दमनदीवियरगजिण्णपाणीयंतेसु वनंतेसु भिंगारकदीणकंदियरवेसु खरफरुसअणिट्ठरिट्ठवाहितविद्दुमग्गेसु दुमेसु तण्हावसमुक्कपक्खपयडियजिब्भतालुयअसंपुडित-तुंडपक्खिसंघेसु ससंतेसु गिम्हउम्हउण्हवायखरफरुसचंडमारुयसुक्कतणपत्तकयवरवाउ-लिभमंतदित्तसंभंतसावयाउलमिगतण्हाबद्धचिण्हपट्टेसु गिरिवरेसु संवट्टिएसु तत्थमियपसव-सिरीसिवेसु अवदालियवयणविवरणिल्लालियग्गजीहे महंततुंबइय पुन्नकन्ने संकुचियथोरपीवरकरे ऊसियलंगूले पीणाइयविरसरडियसद्देणं फोडयंतेव अंबरतलं पायदद्दरएणं कंपयंतेव मेइणितलं विणिम्मुयमाणे य सीयारं सव्वतो समंता वल्लिवियाणाइं छिंदमाणे रुक्खसहस्साति तत्थ सुबहूणि नोल्लायंते विणट्ठरट्ठेव्व नरवरिंदे वायाइद्धेव्व पोए मंडलवाएव्व परिब्भमंते अभिक्खणं २ लिंडणियरं पमुंचमाणे २ बहूहिं हत्थीहि य जाव सद्धिं दिसोदिसिं विप्पलाइत्था,

तत्थ णं तुमं मेहा ! जुन्ने जराजज्जरियदेहे आउरे झंझिए पिवासिए दुब्बले किलंते नट्ठसुइए मूढदिसाए सयातो जूहातो विप्पहूणे वणदवजालापारद्धे उण्हेण तण्हाए य छुहाए य परब्भाहए समाणे भीए तत्थे तसिए उव्विग्गे संजातभए सव्वतो समंता आधावमाणे परिधावमाणे एगं च णं महं सरं अप्पोदयं पंकबहुलं अतित्थेणं पाणियपाए उइन्नो, तत्थ णं तुमं मेहा ! तीरमतिगते पाणियं असंपत्ते अंतरा चेव सेयंसि विसन्ने, तत्थ ण तुमं मेहा ! पाणियं पाइस्सामित्तिकट्टु हत्तं पसारेसि, सेवि य ते हत्थे उदगं न पावति,

तते णं तुमं मेहा ! पुणरवि कायं पच्चुद्धरिस्सामीतिकट्टु बलियतरायं पंकंसि खुत्ते ।

तते णं तुमे मेहा ! अन्नया कदाइ एगे चिरनिज्जूढे गयवरजुवाणए सगाओ जूहाओ करचरणदंतमुसलप्पहारेहिं विप्परद्धे समाणे तं चेव महद्दहं पाणीयं पादेउं समोयरेति, तते णं से कलभए तुमं पासति २ तं पुव्ववेरं समरति २ आसुरुत्ते रुट्ठे कुविए चंडिक्किए मिसिमिसेमाणे जेणेव तुमं तेणेव उवागच्छति २ तुमं तिक्खेहिं दंतमुसलेहिं तिक्खुत्तो पिट्ठतो उच्छुभति उच्छुभित्ता पुव्ववेरं निज्जाएति २ हट्ठतुट्ठे पाणियं पियति २ जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगए,

तते णं तव मेहा ! सरीरगंसि वेयणा पाउब्भवित्था उज्जला विउला जाव दुरहियासा पित्तज्जरपरिगयसरीरे दाहवक्कंतीए यावि विहरित्था । तते णं तुमं मेहा ! तं उज्जलं जाव दुरहियासं सत्तराइंदियं वेयणं वेदेसि सवीसं वाससतं परमाउं पालइत्ता अट्टवसट्टदुहट्टे कालमासे कालं किच्चा इहेव जंबुद्दीवे भारहे वासे दाहिणड्ढभरहे गंगाए महानदीए दाहिणे काले विंझगिरिपायमूले एगेणं मत्तवरगंधहत्थिणा एगाए गयवरकरेणूए कुच्छिंसि गयकलभए जणिते,

तते णं सा गयकलभिया नवण्हं मासाणं वसंतमासंमि तुमं पयाया, तते णं तुमं मेहा ! गब्भवासाओ विप्पमुक्के समाणे गयकलभए यावि होत्था, रत्तुप्पलरत्तसूमालए जासुमणारत्त-पारिजत्तयलक्खारससरसकुंकुमसंझब्भरागवन्ने इट्ठा निगस्स जूहवइणो गणियायारकणेरुकोत्थहत्थी अनेगहत्थिसयसंपरिवुडे रम्मेसु गिरिकाणणेसु सुहंसुहेणं विहरसि । तते णं० उम्मुक्कबालभावे जोव्वणगमणुपत्ते जूहवइणा कालधम्मुणा संजुत्तेणं तं जूहं सयमेव पडिवज्जसि,

तते णं तुमं मेहा ! वणयरेहिं निव्वत्तियनामधेज्जे जाव चउदंते मेरुप्पभे हत्थिरयणे होत्था, तत्थ णं तुमं मेहा ! सत्तंगपइट्ठिए तहेव जाव पडिरूवे, तत्थ णं तुमं मेहा ! सत्तसइयस्स जूहस्स आहेवच्चं जाव अभिरमेत्था, तते णं तुमं अन्नया कयाइ गिम्हकालसमयंसि जेट्ठामूले वणदवजाला-

पलित्तेसु वनंतेसु सुधूमाउलासु दिसासु जाव मंडलवाएव्व तते णं परिब्भमंते भीते तत्थे जाव संजायभए बहूहिं हत्थीहि य जाव कलभियाहि य सद्धिं संपरिवुडे सव्वतो समंता दिसोदिसिं विप्पलाइत्था, ततेणं तव मेहा! तं वनदवं पासित्ता अयमेयारूवे अज्झत्थिए जाव समुप्पज्जित्था— कहिण्णं मन्ने मए अयमेयारूवे अग्गिसंभवे अणुभूयपुव्वे ?, तव मेहा! लेस्साहिं विसुज्झमाणीहिं अज्झव- साणेणं सोहणेणं सुभेणं परिणामेणं तयावरणिज्जाणं कम्माणं खओवसमेणं ईहापूहमग्ग- णगवेसणं करेमाणस्स सन्निपुव्वे जातिसरणे समुपज्जित्था,

ततेणं तुमं मेहा! एयमट्ठं सम्मं अभिसमेसि, एवं खलु मया अतीए दोच्चे भवग्गहणे इहेव जंबुद्दीवे २ भारहे वासे वियड्डगिरिपायमूले जाव तत्थ णं महया अयमेयारूवे अग्गिसंभवे समणुभूए, तते णं तुमं मेहा ! तस्सेव दिवसस्स पुव्वावरण्हकालसमयंसि नियएणं जूहेणं सद्धिं समन्नागए यावि होत्था, तते णं तुमं मेहा! सत्तुस्सेहे जाव सन्निजाइस्सरणे चउद्दंते मेरुप्पभे नाम हत्थी होत्था, तते णं तुज्झं मेहा अयमेयारूवे अज्झत्थिए जाव समुप्पज्जित्था—

तं सेयं खलु मम इयाणिं गंगाए महानदीए दाहिणिल्लंसि कूलंसि विंझगिरिपायमूले दवग्गिसंतापकारणट्ठा सएणं जूहेणं महालयं मंडलं घाइत्तएत्तिकट्टु एवं संपेहेसि २ सुहंसुहेणं विहरसि, तते णं तुमं मेहा ! अन्नया कदाइं पढमपाउसंसि महावुट्ठिकायंसि सन्निवइयंसि गंगाए महानदीए अदूरसामंते बहूहिं हत्थीहिं जाव कलभियाहि य सत्तहि य हत्थिसएहिं संपरिवुडे एगं महं जोयणपरिमंडलं महतिमहालयं मंडलं घाएसि,

जं तत्थ तणं वा पत्तं वा कट्ठं वा कंटए वा लया वा वल्ली वा खाणुं वा रुक्खे वा खुवे वा तं सव्वं तिखुत्तो आहुणिय एगंते एडेसि २ पाएण उद्धवेसि हत्थेणं गेण्हसि तते णं तुमं मेहा ! तस्सेव मंडलस्स अदूरसामंते गंगाए महानदीए दाहिणिल्ले कूले विंझगिरिपायमूले गिरीसु य जाव विहरसि, तते णं मेहा ! अन्नया कदाइ मज्झिमए वरिसारत्तंसि महाविट्ठिकायंसि सन्निवइयंसि जेणेव से मंडले तेणेव उवागच्छसि २ दोच्चंपि तच्चंपि मंगलं घाएसि २ एवं चरिमे वासारत्तंसि महावुट्ठिकायंसि सन्निवइयमाणंसि जेणेव से मंडले तेणेव उवागच्छसि २ तच्चंपि मंडलघायं करेसि जं तत्थ तणं वा जाव सुहंसुहेणं विहरसि,

अह मेहा! तुमं गइंदभावंमि वट्टमाणो कमेणं नलिनिवनविवहनगरे हेमंते कुंदलोद्धउद्धत- तुसारपउरंमि अतिक्कंते अहिनवे गिम्हसमयंसि पत्ते वियट्टमाणेसु वनेसु वनकरेणुविविहदिण्ण- कयपंसुधाओ तुमं उउयकुसुमकयचामरकन्नपूरपरिमंडियाभरामो मयवसविगसंतकडतड- किलिन्नगंधमदवारिणा सुरभिजणियगंधो करेणुपरिवारिओ उउसमत्तजणितसोभो काले दिनयरकरपयंडे परिसोसियतरुवरसिहरभीमतदंसणिज्जे भिंगाररवंतभेरवरवे नानाविहपत्त- कट्ठतणकयवरुद्धतपइमारुयाइद्धनहयलदुमगणे वाउलियादारुणतरे तण्हावसदोसदूसिय- भमंतविविहसावयसमाउले भीमदरिसणिज्जे वट्टंते दारुणंमि गिम्हे मारुतवसपरसपसरियवियंभिएणं अब्भहियभीमभेरवरवप्पगारेणं महुधारपडियसित्तउद्धायमाणधगधगधगंतसद्दुद्धुएणं दित्ततरसफुलिंगेणं धूममालाउलेणं सावयसयंतकरणेणं अब्भहियवणदवेणं जालालोवियनिरु- द्धधूमंधकारभीयो आयवालोयमहंततुंबइयपुन्नकन्नो आकुंचियथोरपीवरकरो भयवसभयंतदित्त- नयणो वेगेण महामेहोव्व पवणोल्लियमहल्लरूवो जेणेव कओ ते पुरा दवग्गिभयभीयहियएणं

*अवगयतण्णएसरुक्खो रुक्खोद्देसो दवग्गिसंताणकारणट्ठाए जेणेव मंडले तेणेव पहारेत्थ गमणाए, एक्को ताव एस गमो !*

*तते णं तुमं मेहा ! अन्नया कदाइं कमेणं पंचसु ऊउसु समतिक्कंतेसु गिम्हकालसमयंसि जेट्ठामूले मासे पायवसंघंससमुट्ठिएणं जाव संवट्टिएसु मियपसुपक्खिसिरीसिवे दिसो दिसिं विप्पलायमाणेसु तेहिं बहूहिं हत्थीहि य सद्धिं जणेव मंडले तेणेव पहारेत्थ गमणाए, तत्थ णं अण्णे बहवे सीहा य वग्घा य विगया दीविया अच्छा य तरच्छा य पारासरा य सरभा य सियाला विराला सुणहा कोला ससा कोकंतिया चित्ता चिल्लला पुव्वपविट्ठा अग्गिभयविहुया एगयाओ बिलधम्मेणं चिट्ठंति, तए णं तुमं मेहा ! जेणेव से मंडले तेणेव उवागच्छसि २ त्ता तेहिं बहूहिं सीहेहिं जाव चिल्ललएहि य जाव चिट्ठसि, तते णं० पाएणं गत्तं कंडुइस्सामीतिकट्टु पाए उक्खित्ते तंसि च णं अंतरंसि अन्नेहिं बलवन्तेहिं सत्तेहिं पणोलिज्जमणे २ ससए अणुपविट्ठे*

*तते णं तुमं मेहा ! गायं कंडुइत्ता पुणरवि पायं पडिनिक्खमिस्सामित्तिकट्टु तं ससयं अणुपविट्ठं पाससि २ पाणाणुकंपायाए भूयाणुकंपाए जीवाणुकंपाए सत्ताणुकंपयाए सो पाए अंतरा चेव संधारिए, नो चेव णं निक्खित्ते, तते णं तुमं मेहा ! ताए पाणाणुकंपयाए जाव सत्ताणुकंपयाए संसारे परित्तीकते माणुस्साउए निबद्धे, तते णं से वनदवे अड्डातिज्जाति रातिंदियाइं तं वनं जामेइ २ निट्ठिए उवरए उवसंते विज्झाए यावि होत्था, तते णं ते बहवे सीहा य जाव चिल्लला य तं वनदवं निट्ठियं जाव विज्झायं पासंति २ त्ता अग्गिभयविप्पमुक्का तण्हाए य छुहाए य परब्भाइया समाणा मंडलातो पडिनिक्खमंति २ सव्वतो समंता विप्पसरित्था, [ तए णं ते बहवे हत्थि जाव छुहाए य परब्भाहया समाणा तओ मंडलाओ पडिनिक्खमंति २ दिसो दिसिं विप्पसरित्था, ]*

*तए णं तुमं मेहा ! जुन्ने जराजज्जरियदेहे सिढिलवलितयापिणिद्धगत्ते दुब्बले किलंते जुंजिए पिवासिते अत्थामे अबले अपरक्कमे अचंकमणो वा ठाणुखंडे वेगेण विप्पसरिस्सामितिकट्टु पाए पसारेमाणे विज्जुहते विव रयतगिरिपब्भारे धरणितलंसि सव्वंगेहि य सन्निवइए, तते णं तव मेहा सरीरगंसि वेयणा पाउब्भूता उज्जला जाव दाहवक्कंतिए यावि विहरसि,*

*तते णं तुमं मेहा ! तं उज्जलं जाव दुरहियासं तिन्नि राइंदियाइं वेयणं वेएमाणे विहरित्ता एगं वाससतं परमाउं पालइत्ता इहेव जंबुद्दीवे २ भारहे वासे रायगिहे नयरे सेणितस्स रन्नो धारिणीए देवीए कुच्छिंसि कुमारत्ताए पच्चायाए !*

**वृ.** 'मेहाइ' त्ति हे मेघ इति, एवमभिलाप्य महावीरस्तमवादीत् ।

'से नून'मित्यादि, अथ नूनं–निश्चितं मेघ ! अस्ति एषोऽर्थः ?, 'हंते' ति कोमलामन्त्रणे अस्त्येषोऽर्थ इति मेघेनोत्तरमदायि, वनचरकैः–शबरादिभिः, 'संखे'त्यादि विशेषणं प्रागिव सत्तुस्सेहे–सप्तहस्तोच्छ्रितः, नवायतो–नवहस्तायतः, एवं दशहस्तप्रमाणः मध्यभागे सप्ताङ्गानि–पादकरपुच्छलिङ्गलक्षणानि प्रतिष्ठितानि भूमौ यस्य स तथा समः–अविषमगात्रः सुसंस्थितो–विशिष्टसंस्थानःपाठान्तरेण सौम्यसम्मितः तत्र सोम्यः–अरौद्राकारो नीरोगो वा सम्मितः–प्रमाणोपेताङ्गः, पुरतः–अग्रतः उदग्रः–उच्चः समुच्छ्रितशिराः शुभानि सुखानि वा आसनानि–स्कन्धादीनि यस्य स तथा, पृष्ठतः–पश्चाद्भागे वराह इव–शूकर इव वराहः अवनतत्वात्, अजिकाया इवोन्नतत्वात् कुक्षी यस्य स तथा, अच्छिद्रकुक्षी मांसलत्वात् अलम्बकुक्षिरपलक्षणवियोगात्

पलम्बलंबोयराहरकरेत्ति–प्रलम्बं च लम्बौ च क्रमेणोदरं च–जठरं अधरकरौ च–ओष्ठहस्तौ यस्य स तथा, पाठान्तरे लम्बौ लम्बोदरस्येवगणपतेरिव अधरकरौ यस्य स तथा,

धनुःपृष्ठाकृति–आरोपितज्यधनुराकारं विशिष्टं–प्रधानं पृष्ठं यस्य स तथा, आलीनानि–सुश्लिष्टानि प्रमाणयुक्तानि वर्त्तितानि–वृत्तानि पीवराणि–उपचितानि गात्राणि–अङ्गानि अपराणि–वर्णितगात्रेभ्योऽन्यानि अपरभागगतानि वा यस्य स तथा, अथवा आलीनादिविशेषणं गात्रं–उरः अपरश्च–पश्चाद्भागो यस्य स तथा, वाचनान्तरे विशेषणद्वयमिदं–अभ्युद्गता–उन्नता मुकुलमल्लिकेव–कोरकावस्थविचकिलकुसुमवद्धवलाश्च दन्ता यस्य सोऽभ्युद्गतमुकुलमल्लिकाधवलदन्तः आनामितं यच्चापं–धनुस्तस्येव ललितं–विलासो यस्याः सा तथा सा च संवेल्लिता च–संवेल्लन्ती सङ्कोचिता वा अग्रसुण्डा–सुण्डाग्रं यस्य स आनामितचापललितसंवेल्लिताग्रसुण्डः,

आलीनप्रमाणयुक्तपुच्छः प्रतिपूर्णाः सुचारवः कूर्म्मवच्चरणा यस्य स तथा पाण्डुराः–शुक्लाः सुविशुद्धाः–निर्म्मलाः स्निग्धाः–कान्ता निरुपहताः–स्फोटादिदोषरहिता विंशतिर्नखा यस्य स तथा, तत्र त्वं हे मेघ ! 'बहुभिर्हस्त्यादिभिः सार्द्धं संपरिवृतः आधिपत्यं कुर्वन् विहरसीति सम्बन्धः

तत्र हस्तिनः–परिपूर्णप्रमाणाः लोट्टकाः–कुमारकावस्थाः कलभाः–बालकावस्थाः हस्तिसहस्य नायकः–प्रधानः न्यायको वा–देशको हितमार्गादेः प्राकर्षीप्राकर्षको अग्रगामी प्रस्थापको–विविधकार्येषु प्रवर्तको यूथपतिः–तत्स्वामी वृन्दपरिवर्द्धकः–तद्वृद्धिकारकः 'सइं पललिए'त्ति सदा प्रललितः–प्रक्रीडितः कन्दर्परतिः–केलिप्रियः मोहनशीलो–निधुवनप्रियः अवितृप्तो–मोहने एवानुपरतवाञ्छः, तथा सामान्येन कामभोगेऽतृषितः गिरिषु च–पर्वतेषु दरीषु च–कन्दरविशेषेषु कुहरेषु च–पर्वतान्तरालेषु कन्दरासु च–गुहासु उज्झरेषु च–उदकस्य प्रपातेषु निझरेषु च–स्यन्दनेषु विदरेषु च–क्षुद्रनद्याकारेषु नदीपुलिनस्यन्दजलगतिरूपेषु वा गर्तासु च–प्रतीतासु पल्वलेषु च–प्रह्लादनशीलेषु चिल्ललेषु च–चिक्खिल्लमिश्रेषु कटकेषु च–पर्वततटेषु कटकपल्वलेषु–पर्वततटव्यस्थितजलाशयविशेषेषु तटीषु च–नद्यादीनां तटेषु वितटीषु च–तास्वेव विरूपासु अथवा वियडिशब्देन लोके अटवी उच्यते,

टङ्केषु च–एकदिशि छिन्नेषु पर्वतेषु कुटकेषु च अधोविस्तीर्णेषूपरि संकीर्णेषु वृत्तपर्वतेषु हस्त्यादिबन्धनस्थानेषु वा शिखरेषु च–पर्वतोपरिवर्त्तिकूटेषु प्राग्भारेषु च–ईषदवनतपर्वतभागेषु मञ्चेषु च–स्तम्भन्यस्तफलकमयेषु नद्यादिलङ्घनार्थेषु मालेषु च–श्वापदादिरक्षार्थेषु तद्विशेषेष्वेव मञ्चमालकाकारेषु पर्वतदेशेष्वित्यन्ये काननेषु च–स्त्रीपक्षस्य पुरुषपक्षस्य चैकतरस्य भोग्येषु वनविशेषेषु अथवा यत्परतः पर्वतोऽटवी वा भवति तानि काननानि जीर्णवृक्षाणि वा तेषु वनेषु च–एकजातीयवृक्षेषु वनखण्डेषु च–अनेकजातीयवृक्षेषु वनराजीषु च–एकानेकजातीयवृक्षाणां पङ्क्तिषु नदीषु च–प्रतीतासु नदीकक्षेषु च–तद्गहनेषु यूथेषु च वानरादियूथाश्रयेषु सङ्गमेषु च–नदीमीलकेषु वापीषु च–चतुरासु पुष्करिणीषु च–वर्तुलासु पुष्करवतीषु वा दीर्घिकासु च–ऋजुसारिणीषु गुंजालिकासु च–वक्रासिणीषु सरस्सु च–जलाशयविशेषेषु सरःपङ्क्तिकासु च–सरसां पद्धतिषु सरःसरःपङ्क्तिकासु च–यासु सरःपङ्क्तिषु एकस्मात्सरसोऽन्यस्मिन्नन्यस्मादन्यत्रैवं सञ्चारकपाटकेनोदकं संचरति तासु बहुविधास्तरुपल्लवाः प्रचुराणि पानीयतृणानि च यस्य भोग्यतया स तथा, निर्भयः शूरत्वात्, निरुद्विग्नः सदैव अनुकूलविषयप्राप्तेः,

सुखंसुखेन–अकृच्छ्रेण।

'पाउसे'त्यादि, प्रावृट्–आषाढश्रावणौ वर्षारात्रो–भाद्रपदाश्वयुजौ शरत्–कार्तिक-मार्गशीर्षौ हेमन्तः–पौषमाघौ वसन्तः–फाल्गुनचैत्रौ एतेषु पञ्चसु ऋतुषु समतिक्रान्तेषु, 'ज्येष्ठामूलमासे'त्ति ज्येष्ठमासे पादपघर्षणसमुत्थितेन शुष्कतृणपत्रलक्षणं कचवरं मारुतश्च तयोः संयोगेन दीप्तो यः स तथा तेन 'महाभयंकरेण' अतिभयकारिणा 'हुतवहेन' अग्निना यो जनित इति हृदयस्थं, 'वनदवो' वनाग्निः, तस्य ज्वालाभिः संप्रदीप्ता ये ते तथा तेषु च वनान्तेषु सत्सु अथवा 'पायवघंससमुट्ठिएण'मित्यादिषु णकाराणां वाक्यालङ्कारार्थत्वात्सप्तम्येकवचनान्तता व्याख्येया, तथा धूमाकुलासु दिक्षु, तथा महावायुवेगेन संघट्टितेषु छिन्नज्वालेषु–त्रुटितज्वालासमूहेषु आपतत्सु–सर्वतः संपतत्सु तथा 'पोल्लरुक्खेसु'त्ति शुषिरवृक्षेषु अन्तरन्तः–मध्ये मध्ये ध्मायमानेषु–दह्यमानेषु तथा मृतैर्मृगादिभिः कुथिताः–कोथमुपनीता विनष्टाः–विगतस्वभावाः 'किमिणकद्दम'त्ति कृमिवत्कर्दमाः नदीनां विवरकाणां च क्षीणपानीयाः अन्ताः–पर्यन्ता येषु, क्वचित् 'किमवत्ति' पाठः तत्र मृतैः कुथिताः विनष्टकृमिकाः कर्दमाः–नदीविदरकलक्षणाः क्षीणा जलक्षयात्पानी-यान्ता–जलाशया येषु ते तथा तेषु वनान्तेषु–वनविभागेषु सत्सु, तथा भृङ्गारकाणां–पक्षिविशेषाणां दीनः क्रन्दितरवो येषु ते तथा तेषु वनान्तेष्विति वर्तते,

तथा खरपरुषं–अतिकर्कशमनिष्टं रिष्ठानां–काकानां व्याहृतं–शब्दितं येषु ते तथा, विद्रुमाणीव–प्रवालानीव लोहितानि अग्नियोगात्पल्लवयोगाद्वा अग्राणि येषां ते विद्रुमाग्रास्ततः पदद्वयस्य २ कर्म्मधारयः, ततस्तेषु वृक्षोत्तमेषु सत्सु, वाचनान्तरे खरपरुषरिष्ठव्याहृतानि विविधानि द्रुमाग्राणि येषु ते खरपरुषरिष्ठव्याहृतविधद्रुमाग्रास्तेषु वनान्तेष्विति, तथा तृष्णावशेन मुक्तपक्षाः–श्लथीकृतपक्षाः प्रकटितजिह्वातालुकाः असंपुटिततुण्डाश्च–असंवृतमुखाः ये पक्षिसङ्घास्ते तथा तेषु 'ससंतेसु'त्ति श्वसत्सु–श्वासं मुञ्चत्सु, तथा ग्रीष्मस्य ऊष्मा च–उष्णता उष्णपातश्च–रविकरसन्तापः खरपरुषचण्डमारुतश्च–अतिकर्कशप्रबलवातः शुष्कतृणपत्रकचवरप्रधानवातोली चेति द्वन्द्वः ताभिर्भ्रमन्तः–अनवस्थिता दप्ताः संभ्रांता ये श्वपदाः–सिंहादयः तैराकुला ये ते तथा, मृगतृष्णा–मरीचिका तल्लक्षणो बद्धः चिह्नपट्टो येषु ते तथा,

ततःपदद्वयस्य कर्म्धारयोऽतस्तेषु सत्सु, गिरिवरेषु–पर्वतराजेषु, तथा संवर्तिकेतेषु–संजातसंवर्तकेषु त्रस्ता–भीता ये मृगाश्च प्रसयाश्च–आटव्यचतुष्पदविशेषाः सरीसृपाश्च–गोधादयस्तेषु, ततश्चासौ हस्ती अवदारितवदनविवरो निर्लालिताग्रजिह्वश्च य इति कर्म्मधारयः 'महंततुबइयपुण्णकण्णे' महान्तौ तुम्बकितौ–भयादरघट्टतुम्बाकारौ कृतौ स्तब्धावित्यर्थः, पुण्णौ–व्याकुलतया शब्दग्रहणे प्रवणौ कर्णौ यस्य स तथा, संकुचितः 'थोर' त्ति स्थूलः पीवरो–महान् करो यस्य स तथा उच्छ्रितलाङ्गुलः 'पीणाइय'त्ति पीनाया–महा तया निर्वृत्तं पैनायिकं तद्विधं यद्विरसं रटितं तल्लक्षणेन शब्देन स्फोटयन्निवाम्बरतलं पाददर्दरेणपादघातेन कम्पयन्निव 'मेदिनीतल'मित्यादि, कण्ठ्यं 'दिसो दिसिं'ति दिक्षु चापदिक्षु च विपलायितवान्, आतुरो–व्याकुलः 'झुंझिए'त्ति बुभुक्षितः दुर्बलः–क्लान्तो ग्लानः नष्टश्रुतिको–मूढदिकः 'परब्भाहए'त्ति पराभ्याहतो बाधितो भीतो–जातभयः त्रस्तोजातक्षोभः 'तसिए'त्ति शुष्क आनन्दरसशोषात् उद्विग्नः–कथमितोऽनर्थान्मोक्ष्येऽहमित्यध्यवसायवान्, किमुक्तं भवति? –संजात भयः–सर्वात्मनोत्पन्नभयः

धावमान—ईषत् परिधावमानः— समन्तात् 'पाणियपाए'त्ति पानं पायः पानीयस्य पायः पानीयपायस्तस्मिन्, जलपानायेत्यर्थः, 'सेयंसि विसन्ने'त्ति पङ्के निमग्नः, कायं प्रत्युद्धरिष्यामीतिकृत्वा कायमुद्धर्त्तुमारब्ध इति शेषः, 'बलियतरायं'ति गाढतरं।

'तए ण'मित्यादि, इहैवमक्षरघटना—त्वया हे मेघ ! एको गजवरयुवा करचरण-दन्तमुशलप्रहारकैर्विप्रालब्धो विनाशयितुमिति गम्यते, विपरद्धो वा—हतः सन् अन्यदा कदाचित् स्वकाद्यूथात् चिरं 'निज्जूढे'त्ति निर्घाटितो यः स पानीयपानाय तमेव महाह्रदं समवतरति स्मेति, 'आसुरुत्ते'त्ति स्फुरितकोपलिङ्गः रुष्टः—उदितक्रोधः कुपितः—प्रवृद्धकोपोदयः चाण्डिक्यितः—संजातचाण्डिक्यः प्रकटितरौद्ररूप इत्यर्थः 'मिसिमिसीमाणे'त्ति क्रोधाग्निना देदीप्यमान इव, एकार्थिका वैते शब्दाः कोपप्रकर्षप्रतिपादनार्थं नानादेशजविनेयानुग्रहार्थं वा, 'उच्छुहइ' अवष्टभ्नाति विध्यतीत्यर्थः, 'निड्डाए'त्ति निर्यातयति समापयति, वेदना किंविधा ? —उज्ज्वला विपक्षलेशेनापि अकलङ्किता विपुला शरीरव्यापकत्वात् क्वचित्तितुलेत्ति पाठस्तत्र त्रीनपि मनोवाक्काय-लक्षणानर्थास्तुलयति—जयति तुलारूढानिव वा करोतीति त्रितुला कर्कशा—कर्कशद्रव्य-मिवानिष्टेत्यर्थः, प्रगाढा—प्रकर्षवतीचण्डा—रौद्रा दुःखा—दुःखरूपा न सुखेत्यर्थः,

किमुक्तं भवति ? — दुरधिसह्या, 'दाहवक्कंतीए'त्ति दाहो व्युत्क्रान्त—उत्पन्नो यस्य स तथा स एव दाहव्युत्क्रान्तिकः 'अट्टवस- ट्टदुहट्टे'त्ति आर्त्तवशं—आर्त्तध्यानवशतामृतो—गतो दुःखार्त्तश्च यः स तथा, 'कणेरुए'त्ति करेणुकायाः 'रत्तुप्पले'त्यादि रक्तोत्पलवद्रक्तः सुकुमारकश्च यः स तथा जपासुमनश्च आरक्तपारिजातकश्च वृक्षविशेषौ लाक्षारसश्च सरसकुङ्कुमं च सन्ध्याभ्ररा-गश्चेति द्वन्द्वः एतेषामिव वर्णो यस्य स तथा, 'गणियार'त्ति गणिकाकाराः—समकायाः करेणवस्तासां 'कोत्थं'ति उदरदेशस्तत्र हस्तो यस्य कामक्रीडापरायणत्वात् स तथा, इह चेत्समासान्तो द्रष्टव्यः । 'कालधंमुण'त्ति कालः—मरणं स एव धर्मो—जीवपर्यायः कालधर्मः 'निव्वत्तियनामधेज्जो'इ यावत्करणेन यद्यपि समग्रः पूर्वोक्तो हस्तिवर्णकः सूचितस्थापि श्वेततावर्णकवर्ज्जो द्रष्टव्यः, इह रक्तस्य तस्य वर्णितत्वादत एवाग्रे 'सत्तुस्सेहे'इत्यादिकमतिदेशं वक्ष्यति यत् पुनरिह दृश्यते 'सत्तंगे'त्यादि तद्वाचनान्तरं, वर्णकापेक्षं तु लिखितमिति ।

'लेसाही'त्यादि तेजोलेश्याद्यन्यतरलेश्यां प्राप्तस्येत्यर्थः अध्यवसानं—मानसी परिणतिः परिणामो—जीवपरिणतिः, जातिस्मरणावरणीयानि कर्म्माणिमतिज्ञानावरणीयभेदाः क्षयोपशमः—उदितानां क्षयोऽनुदितानां विष्कम्भितोदयत्वं ईहा—सदर्थाभिमुखो वितर्क इत्यादि प्राग्वत्, संज्ञिनः पूर्वजातिः—प्राक्तनं जन्म तस्या यत् स्मरणं तत्संज्ञिपूर्वजातिस्मरणं व्यस्तनिर्देशे तु संज्ञी पूर्वो भवो यत्र तत्संज्ञिपूर्वं संज्ञीति च विशेषणं स्वरूपज्ञापनार्थं, न ह्यसंज्ञिनो जातिविषयं स्मरणमुत्पद्यत इति, 'अभिसमेसि'त्ति अवबुध्यसे प्रत्यपराह्नः—अपराह्नः,

—'तए णं'मित्यादिको ग्रन्थो जातिस्मरणविशेषणमाश्रित्य वर्णितः, 'दवग्गिजायकारणट्ठ'त्ति दवाग्नेः संजातस्य कारणस्य—भयहेतोर्निवृत्तये इदं दवाग्निसंजातकारणार्थं, अर्थशब्दस्य निवृत्त्य-र्थत्वात्, क्वचित्त 'दवग्गिसंताणकारणट्ठ'त्ति दृश्यते, तत्र दवाग्निसन्त्राणकारणायेति व्याख्येयं, 'मंडलं घाएसि' वृक्षाद्युपघातेन तत्करोतीत्यर्थः 'खुवेतयति व'त्ति क्षुद्रोहस्वशिखः शाखी 'आहुणि-य'त्ति २ प्रकम्प्य चलयित्वेत्यर्थः, 'उद्धवेसि'त्ति उद्धरसि 'एडेसि'त्ति छर्द्दयसि, 'दोच्चंपि' द्वितीयं

तस्यैव मण्डलस्य घातं, एवं तृतीयमिति, नलिनीवनविवधनकरे, इह विवधनं—विनाशः, 'हेमंते' त्ति शीतकाले कुन्दाः—पुष्पजातीयविशेषाः लोध्राश्च—वृक्षविशेषास्ते च शीतकाले पुष्प्यन्त्यतस्तेउद्धताः—पुष्पसमृद्धया उद्धुरा इव यत्र स तथा, तथा तुषारं—हिमं तत् प्रचुरं यत्र स तथा, ततः कर्मधारयः ततस्तत्र, ग्रीष्मे—उष्णकाले विवर्तमानो—विचरन् वनेषु वनकरेणूनां तामिर्वा विविधा 'दिन्न' त्ति दत्ताः कजप्रसवैः—पद्मकुसुमैर्घाताः—प्रहारा येषु यस्य वा स तथा 'वनरेणुविविहदिन्नकय-पंसुघाओ' त्ति पाठान्तरे तु वनरेणवो—वनपांशवो विविधं—अनेकधा 'दिन्न' त्ति दत्ता दिस्वात्मनि च क्रिडापरतया क्षिप्ता येन स तथा, तथा क्रीडयैव कृताः पांशुघाता येन स तथा, ततः पदद्वयस्य कर्म्मधारयः,

'तुमं' ति त्वं, तथा कुसुमैः कृतानि यानि चामरवत्त्वकर्णपूराणि तैः परिमण्डितोऽभिरामश्च यः तथा, क्वचित् 'उउयकुसुम' त्ति पाठः, तत्र ऋतुजकुसुमैरिति व्याख्येयं, तथा मदवशेन विकसन्ति कटतटानि—गण्डतटानि क्लिन्नानि—आर्द्रीकृतानि येन तत्तथा तच्च तद्गन्धमदवारि च तेन सुरभिजनितगन्धः—मनोज्ञकृतगन्धः करेणुपरिवृतः ऋतुभिः समस्ता समाप्ता वा—परिपूर्णा जनिता शोभा यस्य स तथा, काले किंभूते ?—दिनकरः करप्रचण्डो यत्र स तथा तत्र, परिशोषिताः—नीरसीकृताः तरुवराः श्रीधराः—शोभावन्तो येन परिशोषिता वा तरुवराणां श्रीः—संपद्धरायां—भुवि वा येन, पाठान्तरे परिशोषितानि तरुवरशिखराणि येन स तथा स चासौ भीमतरदर्शनीयश्चेति,

तत्र, भृङ्गाराणां—पक्षिविशेषाणां रुवतां—रवं कुर्वतां भैरवो—भीमो रवः—शब्दो यस्मिन् स तथा तत्र, नानाविधानि पत्रकाष्ठतृणकचवराण्युद्धतानि—उत्पाटितानि येन स तथा स चासौ प्रतिमारुतश्च—प्रतिकूलवायुस्तेन आदिग्धं—व्याप्तं नभस्तलं—व्योम 'पडुममाणे' त्ति पटुत्वादुपतापकारि यस्मिन्, पाठान्तरे उक्तविशेषणेन प्रतिमारुतेनादिग्धं नभस्तलं द्रुमगणश्च यस्मिन् स तथा, तत्र वातोल्या—वात्यया दारुणतरो यः स तथा तत्र, तृष्णावशेन ये दोषा—वेदनादयस्तैर्दोषिता—जातदोषा दूषिता वा भ्रमन्तो विविधा ये श्वपदास्तैः समाकुलो यः स तथा तत्र, भीमं यथा भवत्येवं दृश्यते यः स भीमदर्शनीयः तत्र वर्तमानो दारुणे ग्रीष्मे, केनेत्याह—मारुतवशेन यः प्रसरः—प्रसरणं तेन प्रसृतो विजृम्भितश्च—प्रबलीभूतो यः स तथा तेन, वनदवेनेति योगः,

अभ्यधिकं यथा भवत्येवं भीमभैरवः—अतिभीष्मो रवप्रकारो यस्य स तथा तेन, मधुधाराया धरपतितं—पतनं तेन सिक्त उद्धावमानः—प्रवर्द्धमानो धगधगायमानो—जाज्वल्यमानः स्पन्दोद्धतश्च—दह्यमानदारुस्पन्दप्रबलः पाठान्तरे शब्दोद्धतश्च यः स तथा तेन दीप्ततरो यः सस्फुलिङ्गश्च तेन, धूममालाकुलेनेति प्रतीतं, श्वापदशतान्तकरणेन—तद्विनाशकारिणा ज्वालाभिरालोपितः—कृताच्छादनो निरुद्धश्च—विवक्षितदिग्गमनेन निवारितो धूमजनितान्धकाराद्भीतश्च यः स तथा, आत्मानमेव पालयतीत्यात्मपालः, पाठा० 'आयवालोय' त्ति तत्र आतपालोकेन—हुतवहतापदर्शनेन महान्तौ तुम्बकितौ स्तब्धतया अरघट्टतुम्बाकृती ससंभ्रमी कर्णौ यस्य स तथा,

आकुञ्चतस्थूलपीवरकरः भयवशेन भजन्ती दिश इति गम्यते दीप्ते नयने यस्य स तथा 'आकुंचियथोरपीवरकराभोयसव्वभयंतदित्त नयणो' त्ति पाठान्तरं तत्राभोगो—विस्तरः सर्वा दिशो भजन्ती दीप्ते नयने यस्येति, वेगेन महामेघ इव वातेनोदितमहारूपः, किमित्याह—येन यस्यां दिशि कृतो—विहितस्ते — त्वया पुरा—पूर्वं दवाग्निभयभीतहृदयेन अपगतानि तृणानि तेषामेव च

प्रदेशा—मूलादयोऽवयवा वृक्षाश्च यस्मात्सोऽपगतृणप्रदेशवृक्षः, कौऽसौ ? —वृक्षोद्देशः—वृक्षप्रधानो भूमेरेकदेशो रूक्षोद्देशो वा, किमर्थं ? —दवाग्निसन्त्राणकारणार्थ—दवाग्निसन्त्राणहेतुरिदं भवत्वित्येतदर्थं, तथा येनैव—यस्यामेव दिशि मण्डलं तेनैव—तत्रैव प्रधारितवान् गमनाय, कथं बहुभिर्हस्त्यादिभिः सार्द्धमित्ययमेको गमः ।

यत् पुनः 'तए णं तुमं मेहा ! अन्नया कयाइं कमेण पंचसु' इत्यादि दृश्यते तद्गमान्तरं मन्यामहे, तच्च एवं द्रष्टव्यं 'दुच्चंपि मंडलघायं करेसि जाव सुहंसुहेणं विहरसि, तए णं तुमं मेहा ! अन्नया कयाइ पंचसु उऊसु अइक्कंतेसु' इत्यादि, यावत् 'जेणेव मण्डले तेणेव० सिंहादयः प्रतीताः नवरं वृका—वरुक्षाः द्वीपिकाः—चित्रकाः अच्छत्ति—रिच्छाः तरच्छा—लोकप्रसिद्धाः परासराः—शरभा शृगालविरालशुनकाः प्रतीताः कोलाः—शूकराः शशकाः—प्रतीताः कोकन्तिका—लोमटकाः चित्राः चिल्लगा—आरण्या जीवविशेषाः, एतेषां मध्येऽधिकृतवाचनायां कानिचिन्न दृश्यन्ते, अग्निभयविद्रुताः—अग्निभयाभिभूताः 'एगओ' त्ति एकतो बिलधर्मेण—बिलाचारेण यथैकत्र बिले यावन्तो मर्कोटकादयः संमान्ति तावन्तस्तिष्ठन्ति एवं तेऽपीति, ततस्त्वया हे मेघ ! गात्रेण गात्रं कण्डूयिष्ये इतिकृत्वा—इतिहेतोः पाद उत्क्षिप्तः—उत्पाटितः,

तंसि च णं अंतरंसि—तस्मिंश्चान्तरे पादाक्रान्तपूर्वे अन्तराले इत्यर्थः । पादं निक्खे-विस्सामितिकट्टु' इह भुवं निरूपयन्निति शेषः, 'प्राणानुकम्पये'त्यादि पदचतुष्टयमेकार्थं दयाप्रकर्षप्रतिपादनार्थं, 'निट्ठिए' त्ति निष्ठां गतः कृत्स्वकार्योजात इत्यर्थः, उपरतोऽनालिङ्गितेन्धनाद् व्यावृत्तः उपशान्तो—ज्वालोपशमात् विध्यातोऽङ्गारमुर्मुराद्यभावात् 'वावी' ति समुच्चये 'जीर्ण' इत्यादि शिथिला वलिप्रधाना या त्वक् तया पिनद्धं गात्रं—शरीरं यस्य स तथा अस्थामा—शारीबलविकलत्वात् अबलः—अवष्टम्भवर्जितत्वात् अपराक्रमो—निष्पादितस्वफलमिमानविशेषरहितत्वात्, अचंक्रमणतो वा 'ठाणुखंडे' त्ति ऊर्द्धस्थानेन स्तम्भिगात्र इत्यर्थः 'रययगिरिपब्भारेत्ति इह प्रागम्भार—ईषदवनतं खण्डं, उपमा चानेनास्य महत्तयैव, न वर्णतो, रक्तत्वात्तस्य, वाचनान्तरे तु सित एवासाविति ।

*मू. (३८) तते णं तुमं मेहा ! आनुपुव्वेणं गब्भवासाओ निक्खंते समाणे उम्मुक्कबालभावे जोव्वणगमणुपत्ते मम अंतिए मुंडे भवित्ता आगाराओ अनगारियं पव्वइए,*

*तं जति जाव तुमे मेहा ! तिरिक्खजोणियभावमुवगएणं अपडिलद्धसंमत्तरयणलंभेणं से पाणे पाणाणुकंपयाए जाव अंतरा चेव संधारिते नो चेव णं निक्खित्ते किमंग पुण तुमं मेहा ! इयाणिं विपुलकुलसमुब्भवेणं निरुवहयसरीरदंतलद्धपंचिंदिएणं एवं उट्ठाणबलवीरियपुरिसगारपरक्कमसंजुत्तेणं मम अंतिए मुंडे भवित्ता आगारातो अनगारियं पव्वतिए समाणे समणाणं निग्गंथाणं राओ पुव्वरत्तावरत्तकालसमयंसि वायणाए जाव धम्माणुओगचिंताए य उच्चारस्स वा पासवणस्स वा अतिगच्छमाणाण य निग्गच्छमाणाण य हत्थसंघट्टणाणि य पायसंघट्टणाणि य जाव रयरेणुगुंडणाणि य नो सम्मं सहसि खमसि तितिक्खसि अहियासेसि ?*

*तते णं तस्स मेहस्स अनगारस्स समणस्स भगवतो महावीरस्स अंतिए एतमट्ठं सोच्चा निसम्म सुभेहिं परिणामेहिं पसत्थेहिं अज्झवसाणेहिं लेस्साहिं विसुज्झमाणीहिं तयावरणिज्जाणं कम्माणं खओवसमेणं ईहावूहमग्गणगवेसणं करेमाणस्स सन्निपुव्वे जातीसरणे समुप्पन्ने, एतमट्ठं*

*सम्मं अभिसमेति। तते णं से मेहे कुमारे समणेणं भगवया महावीरेणं संभारियपुव्वजातीसंभरणे दुगुणाणीयसंवेगे आणंदयंसुपुन्नमुहे हरिसवसेणं धाराहयकदंबकं पिव समुस्ससितरोमकूवे समणं भगवं महावीरं वंदति नमंसति २ त्ता एवं वदासी—अज्जप्पभिती णं भंते! मम दो अच्छीणि मोत्तूणं अवसेसे काए समणाणं निग्गंथाणं निसट्ठेत्तिकट्टु पुणरवि समणं भगवं मावीरं वंदति नमंसति २ एवं वदासी—इच्छामि णं भंते! इयाणिं सयमेव दोच्चंपि सयमेव पव्वावियं सयमेव मुंडावियं जाव सयमेव आयारगोयरं जायामायावत्तियं धम्ममातिक्खह, तए णं समणे भगवं महावीरे मेहं कुमारं सयमेव पव्वावेइ जाव जायामायावत्तियं धम्ममाइक्खइ,*

*एवं देवाणुप्पिया! गन्तव्वं एवं चिट्ठियव्वं एवं निसीयव्वं एवं तुयट्टियव्वं एवं भुंजियव्वं भासियव्वं उट्ठाय २ पाणाणं भूयाणं जीवाणं सत्ताणं संजमेणं संजमितव्वं, तते णं से मेहे समणस्स भगवतो महावीरस्स अयमेयारूवं धम्मियं उवदेसं सम्मं पडिच्छति २ तह चिट्ठति जाव संजमेणं संजमति, तते णं से मेहे अणगारे जाए ईरियासमिए अणगारवन्नओ भाणियव्वो,*

*तते णं से मेहे अणगारे समणस्स भगवतो महावीरस्स अंतिए एतारूवाणं थेराणं सामातियमातियाणि एक्कारस अंगातिं अहिज्जति २ त्ता बहूहिं चउत्थछट्ठट्ठमदसमदुवालसेहिं मासद्धमासखमणेहिं अप्पाणं भावेमाणे विहरति, तते णं स० भ० महावीरे रायगिहाओ नगराओ गुणसिलाओ चेतियाओ पडिनिक्खिमति २ बहिया जणवयविहारं विहरति।*

**वृ.** 'अपडिलद्धसंमत्तरयणलंभेणं'ति अप्रतिलब्धः—असंजातः, 'विपुलकुलसमुब्भवेण'मित्यादौ णंकारा वाक्यालङ्कारे निरुपहतं शरीरं यस्य स तथा दान्तानि—उपशमं नीतानि प्राक्काले लब्धानि सन्ति पञ्चेन्द्रियाणि येन स तथा, ततः कर्म्मधारयः, पाठान्तरे निरुपहतशरीरप्राप्तश्चासी लब्धपञ्चेन्द्रियश्चेति समासः, 'एव'मित्युपलभ्यमानरुपैरुत्थानादिभिः संयुक्तो यः स तथा, तत्र उत्थानं—चेष्टाविशेषः बलं—शारीरं वीर्यं—जीवप्रभवं पुरुषकारः—अभिमानविशेष पराक्रमः—स एव साधितफल इति।

नो सम्यक् सहसे भयाभावेन क्षमसे क्षोभाभावेन तितिक्षसे दैन्यानवलम्बनेन अध्यासयसि अविचलितकायतया, एकार्थिकानि चैतानि पदानि, तस्य मेघस्यानगारस्य जातिस्मरणं समुत्पन्नमिति सम्बन्धः, समुत्पन्ने च तस्य किमित्याह—एतमार्थं—पूर्वोक्तं वस्तु सम्यक् 'अभिसमेइ'त्ति अभिसमेति अवगच्छतीत्यर्थः।

'संभारियपुव्वजाईसरणे'त्ति संस्मारितं पूर्वजात्योः—प्राक्तजन्मनोः सम्बन्धि सरणं—गमनं पूर्वजातिसरणं यस्य स तथा, पाठान्तरे संसमारितपूर्वभवः, तथा प्राक्कालापेक्षया द्विगुण आनीतः संवेगो यस्य स तथा, आनन्दाश्रुभिः पूर्णं भृतं प्लुतमित्यर्थो मुखं यस्य स तथा, 'हरिसवस'त्ति अनेन 'हरिसवसविसप्पमाणहियए'त्ति द्रष्टव्यं, धाराहतं यत्कदम्बकं—कदम्बपुष्पं तद्वत् समुच्छ्रितरोमकूपो रोमाञ्चित इत्यर्थः 'निसट्ठे'त्ति निःसृष्टो दत्तः। अनगारवर्णको वाच्यः, स चायं—

'ईरियासमिए भासासमिए एसणासमिए आयाणभंड-मत्तनिक्खेवणासमिए उच्चारपासवणखेलसिंघाणजल्लपरिट्ठावणियासमिए मणसमिए वयसमिए कायसमिए मणगुत्ते ३' मनःप्रभृतीनां समितिः—सत्प्रवृत्तिः गुप्तिस्तु—निरोधः अत एव 'गुत्ते गुत्तिंदिए गुत्तबंभयारी;' ब्रह्मगुप्तिभिः चाई—सङ्गानां वण्णे लज्जू—परज्जुरिवावक्रव्यवहारात् लज्जालुर्वा संयमेन लौकिकलज्जया वा 'तवस्सी

खंतिखमे' क्षान्त्या क्षमते यः स तथा 'जिइंदिए सोही' शाधयत्यत्मपरावविति शोधी शोभी वा 'अनिदाने अप्पुस्सुए'अल्पौत्सुक्योऽनुत्सुक इत्यर्थः, 'अबहिल्लेसे'संयमादबहिर्भूतचित्तवृत्तिः 'सुसामण्णरए इणमेव निग्गंथं पावयणं पुरओतिकट्टु विहरइ' निर्ग्रन्थप्रवचनानुमार्गेण इत्यर्थः ।

**मू. (३९)** *तते णं से मेहे अणगारे अन्नया कदाइ समणं भगवं० वंदति नमंसति एवं वदासी–इच्छामि णं भंते ! तुब्भेहिं अब्भणुन्नाते समाणे मासियं भिक्खुपडिमं उवसंपज्जित्ताणं विहरित्तए, अहासुहं देवाणुप्पिया ! मा पडिबन्धं करेह,*

*तते णं से मेहे समणेणं भगवया० अब्भणुन्नाते समाणे मासियं भिक्खुपडिमं उवसंपज्जित्ताणं विहरति, मासियं भिक्खुपडिमं अहासुत्तं अहाकप्पं अहामग्गं० सम्मं काएणं फासेति पालेति सोभेति तीरेति किट्टेति सम्मं काएणं फासेत्ता पालित्ता सोभेत्ता तीरेत्ता किट्टेत्ता पुनरवि समणं भगवं महावीरं वंदति नमंसति २ त्ता एवं वदासी–*

*इच्छामि णं भंते ! तुब्भेहि अब्भणुन्नाते समाणे दोमासियं भिक्खुपडिमं उवसंपज्जित्ता णं विहरित्तए, अहासुहं देवाणुप्पिया ! मा पडिबन्धं करेह, जहा पढमाए अभिलावो तहा दोच्चाए तच्चाए चउत्थाए पंचमाए छम्मासियाए सत्तमासियाए पढमसत्तराइंदियाए दोच्चं सत्तरातिंदियाए तइयं सत्तरातिंदियआए अहोरातिंदियाएवि एगराइंदियाएवि,*

*तते णं से मेहे अनगारे बारस भिक्खुपडिमाओ सम्मं काएणं फासेत्ता पालेत्ता सोभेत्ता तीरेत्ता किट्टेत्ता पुनरवि वंदति नमंसइ २ त्ता एवं वदासी–इच्छामि णं भंते ! तुब्भेहिं अब्भणुन्नाए समाणे गुणरतणसंवच्छरं तवोकम्मं उवसंपज्जित्ता णं विहरित्तए,*

*अहासुहं देवाणुप्पिया ! मा पडिबंधं करेह, तते णं से मेहे अनगारे पढमं मासं चउत्थंचउत्थेणं अनिक्खित्तेणं तवोकम्मेणं दिया ठाणुक्कुडुए सूराभिमूहे आयावणभूमीए आयावेमाणे रत्तिं वीरासणेणं अवाउडएणं दोच्चं मासं छट्ठंछट्ठेणं० तच्चंमासं अट्ठमं अट्ठमेणं० चउत्थं मासं दसमं२ अनिक्खितेणं तवोकम्मेणं दिया ठाणु कक्कुडुए सूराभिमूहे आयावणभूमीणे रत्तिं वीरासणेणं अवाउडएणं पंचमं मासं दुवालसमं २ अनिक्खित्तेणं तवोकम्मेणं दिया ठाणुक्कुडूए सूराभिमुहे आयावणभूमिए आयावेमाणे रत्तिं वीरासणेणं अवाउडतेणं,*

*एवं खलु एएणं अभिलावेणं छट्ठे चोद्दसमं २ सत्तमे सोलसमं २ अट्ठमे अट्ठारसमं २ नवमे वीसतिमं २ दसमे बावीसतिमं २ एक्कारसमे चउव्वीसतिमं २ बारसमे छव्वीसतिमं २ तेरसमे अट्ठावीसतिमं २ चोद्दसमे तीसइमं २ पंचदसमे बत्तीसतिमं २ चउत्तीसतिमं २ सोलसमे अनिक्खित्तेणं तवोकम्मेणं दिया ठाणुक्कुडुएणं सूराभिमूहे आयावणभूमीए आयावेमाणे रत्तिं वीरासणेणं य अवाउडतेण य, तते णं से मेहे अणगारे गुणरयणसंवच्छरं तवोकम्मं अहासुत्तं जाव सम्मं काएणं फासेइ पालेइ सोभेइ तीरेइ किट्टेइ अहासुत्तं अहाकप्पं जाव किट्टेत्ता समणं भगवं महावीरं वंदति नमंसति २ बहूहिं छट्ठट्ठमदसमदुवालसेहिं मासद्धमासखमणेहिं विचित्तेहिं तवोकम्मेहिं अप्पाणं भावेमाणे विहरति ।*

**वृ.** 'अहासुहं'ति यथासुखं सुखानतिक्रमेण मा पडिबन्धं–विघातं विधेहि विवक्षितस्येति गम्यं, 'भिक्खुपडिम'त्ति अभिग्रहविशेषः, प्रथमा एकमासिकी एवं द्वितीयाद्याः सत्तम्यन्ताः क्रमेण

द्वित्रिचतुष्पञ्चषट्सप्तमासमानाः, अष्टमीनवमीदशम्यः प्रत्येकं सप्ताहोरात्रमानाः एकादशी अहोरात्रमाना द्वादशी एकरात्रमानेति,

॥ १ ॥ तत्र 'पडिवज्जइ एयाओ संघयणधिइजुओ महासत्तो ।
पडिमाओ भावियप्पा सम्मं गुरुणा अणुन्नाओ ॥

॥ २ ॥ गच्छेच्चिय निम्माओ जा पुव्वा दस भवे असंपुण्णा ।
नवमस्स तइय वत्थू होइ जहन्नो सुयाहिगमो ॥

॥ ३ ॥ वोसट्ठचत्तदेहो उवसग्गसहो जहेव जिणकप्पी ।
एसण अभिग्गहिया भत्तं च अलेवडं तस्स ॥

॥ ४ ॥ दुट्ठस्सहत्थिमाइ तओ भएणं पयंपि नोसरइ ।
एमाइ नियमसेवी विहरइ जाऽखंडिओ मासो ॥'

इत्यादिग्रन्थान्तराभिहितो विधिरासां द्रष्टव्यः यच्चेह एकादशाङ्गविदोऽपि मेघानगारस्य प्रतिमानुष्ठानं भणितं तत्सर्वविदस- मुपदिष्टत्वादनवद्यमवसेयमिति, 'यथासूत्रं' सूत्रानतिक्रमेण 'यथाकल्पं' प्रतिमाचारानतिक्रमेण 'यथामार्गं' ज्ञानाद्यनतिक्रमेण क्षायोपशमिकभावानतिक्रमेण वा कायेन न मनोरथमात्रेण 'फासेइ' त्ति उचितकाले विधिना ग्रहणात् 'पालयति' असकृदुपयोगेन प्रतिजागरणात् 'शोभयति' पारणकदिने गुरुदत्तशेषभोजनकरणात् शोधयति वा—अतिचारप- ङ्कक्षालनात् 'तीरयति' पूर्णेऽपि काले स्तोककालमवस्थानात् 'कीर्त्तयति' पारणकदिने इदं चेदं चैतस्याः कृत्यं कृमित्येवं कीर्त्तनात् ।

गुणानां—निर्जराविशेषाणां रचना—करणं संवत्सरेण—सत्रिभागवर्षेण यस्मिंस्तत्तपो गुणरचनसंवत्सरं गुणा एव वा रत्नानि यत्र स तथा गुणरत्नः संवत्सरो यत्र तपसि तद्गुणर- त्नसंवत्सरमिति, इह च त्रयोदश मासाः सप्तदश दिनाधिकास्तपःकालः, त्रिसप्ततिश्च दिनानि पारणककाल इति, एवं चायं—

॥ १ ॥ "पन्नरस वीस चउवीस चेव चउवीस पण्णवीसा य ।
चउवीस् एक्कवीसा चउवीसा सत्तवीसा य ॥

॥ २ ॥ तीसा तेतीसावि य चउवीस छवीस अट्ठवीसा य ।
तीसा बत्तीसावि य सोलस मासेसु तवदिवसा ॥

॥ ३ ॥ पन्नरसदसट्ठ छप्पंच चउर पंचसु य तिण्णि तिण्णित्ति ।
पंचसु दो दो य तहा सोलसमासेसु पारणगा ॥"

इह च यत्र मासे अष्टमादितपसो यावन्ति दिनानि न पूर्यन्ते तावन्त्यग्रेतमासादाकृष्य पूरणीयान्यधिकानि चाग्रेतनमासे क्षेप्तव्यानीति । 'चउत्थ;मित्यादि, चत्वारि भक्तानि यत्र त्यज्यन्ते तच्चतुर्थं, इयं चोपवासस्य संज्ञा, एवं षष्ठादिरुपवासद्वयादेरिति, 'अणिक्खित्तेणं' ति अविश्रान्तेन 'दिया ठाणुक्कुडुएणं' दिवा—दिवसे स्थानं—आसनमुत्कुटुकं आसनेषु पुतालगनरूपं यस्य स तथा आतापयन्—आतापनां कुर्वन् 'वीरासणेणं' ति सिंहासनोपविष्टस्य भुवि न्यस्तपादस्यापनीतसिंहासन- स्येव यदवस्थानं तद्वीरासनं तेन व्यवस्थित इति गम्यते । किंभूतेन अप्रावृतेन—अविद्यमानप्रावरणेन स एव वा अप्रावृतः णंकारस्तु अलङ्कारार्थः ।

*मू. (४०) तते णं से मेहे अनगारे तेणं उरालेणं विपुलेणं सस्सिरीएणं पयत्तेणं पग्गहिएणं कल्लाणेणं सिवेणं धन्नेणं मंगल्लेणं उदग्गेणं उदारएणं उत्तमेणं महानुभावेणं तवोकम्मेणं सुक्के भुक्खे लुक्ख निम्मंसे निस्सोणिए किडिकिडियाभूए अट्ठिचम्मावणद्धे किसे धमणिसंतए जाते यावि होत्था, जीवं जीवेणं गच्छति जीवं जीवेणं चिट्ठति भासं भासित्ता गिलायति भासं भासमाणे गिलायति भासं भासिस्सामित्ति गिलायति से जहा नामए इंगालसगडियाइ वा कट्ठसगडियाइ वा पत्तसग० तिलसगडि० एरंडकट्ठसगडियाइ वा उण्हे दिन्ना सुक्का समाणी ससद्दं गच्छइ ससद्दं चिट्ठति एवामेव मेहे अणगारे ससद्दं गच्छइ ससद्दं चिट्ठइ उवचिए तवेणं अवचिते मंससोणिएणं हुयासणे इव भासरासिपरिच्छन्ने तवेणं तेएणं तवतेयसिरीए अतीव अतीव उवसोभेमाणे २ चिट्ठति।*

*तेणं कालेणं तेणं समएणं समणे भगवं महावीरे आइगरे तित्थगरे जाव पुव्वाणुपुव्विं चरमाणे गामाणुगामं दुतिज्जमाणे सुहंसुहेणं विहरमाणे जेणामेव रायगिहे नगरे जेणामेव गुणसिलए चेतिए तेणामेव उवागच्छति २ त्ता अहापडिरूवं उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरति,*

*तते णं तस्स मेहस्स अनगारस्स राओ पुव्वरत्तावरत्तकालसमयंसि धम्मजागरियं जागरमाणस्स अयमेयारूवे अज्झत्थिते जाव समुपज्जित्था-एवं खलु अहं इमेणं उरालेणं तहेव जाव भासं भासिस्सामीति गिलामि तं अत्थि ता मे उट्ठाणे कम्मे बले वीरिए पुरिसक्कारपरक्कमे सद्धा धिई संवेगे तं जाव ता मे अत्थि उट्ठाणे कम्मे बले वीरिए पुरिसगारपरक्कमे सद्धा धिई संवेगे जाव इमे धम्मायरिए धम्मोवदेसए समणे भगवं महावीरे जिणे सुहत्थी विहरति ताव ताव मे सेयं कल्लं पाउप्पभायाए रयणीए जाव तेयसा जलंते सूरे समणं ३ वंदित्ता नमंसित्ता समणेणं भगवता महावीरेणं अब्भणुन्नायस्स समाणस्स सयमेव पंच महव्वयाइं आरुहित्ता गोयमादिए समणे निग्गंथे निग्गंथीओ य खामेता तहारूवेहिं कडाईहिं थेरेहिं सद्धिं विउलं पव्वयं २ सणियं सणियं दुरूहित्ता सयमेव मेहघणसन्निगासं पुढविसिलापट्टयं पडिलेहेत्ता संलेहणाझूसणाए झूसियस्स भत्तपाणपडियाइक्खितस्स पाओवगयस्स कालं अणवकंखमाणस्स विहरित्तए,*

*एवं संपेहेति २ कल्लं पाउप्पभायाए रयणीए जाव जलंते जेणेव समणे भगवं महावीरे तेणेव उवागच्छति २ समणं ३ तिक्खुत्तो आदाहिणं पदाहिणं करेइ २ त्ता वंदति नमंसति २ नच्चासन्ने नातिदूरे सुस्सूसमाणे नमंसमाणे अभिमुहे विनएणं पंजलियपुडे पज्जुवासति, मेहेत्ति समणे भगवं महावीरे मेहं अणगारं एवं वदासी-*

*से नूनं तव मेहा! राओ पुव्वरत्तावरत्तकालसमयंसि धम्मजागरियं जागरमाणस्स अयमेयारूवे अज्झत्थिते जाव समुपज्जित्था-एवं खलु अहं इमेणं ओरालेणं जाव जेणेव अहं तेणेव हव्वमागए,*

*से णूणं मेहा अट्ठे समट्ठे?, हंता अत्थि, अहासुहं देवाणुप्पिया! मा पडिबंधं करेह, तते णं से मेहे अनगारे समणेणं भगवया० अब्भणुन्नाए समाणे हट्ठ जाव हियए! उट्ठाइ २ त्ता समणं ३ तिक्खुत्तो आयाहिणं पयाहिणं करेइ २ त्ता वंदइ नमंसइ २ त्ता सयमेव पंच महव्वयाइं आरुभेइ थेरे त्ता गोयमाति समणे निग्गंथे निग्गंथीओ य खामेति खामेता य तहारूवेहिं कडाईहिं थेरेहिं सद्धिं विपुलं पव्वयं सणियं २ दुरूहति २ सयमेव मेहघणसन्निगासं पुढविसिलापट्टयं पडिलेहसियाए उच्चारपासवणभूमिं पडलेहति २ दब्भसंथारगं संथरति २ दब्भसंथारगं दुरूहति २ पुरत्थ*

*संपलियंकनिसन्ने करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वदासी–*

*नमोऽत्थु णं अरिहंताणं भगवंताणं जाव संपत्ताणं, नमोत्थु णं समणस्स भगवओ महावीरस्स जाव संपाविउकामस्स मम धम्मायरियस्स वंदामि णं भगवंतं तत्थगयं इहगए पासउ मे भगवं तत्थगते इहगतंति कट्टु वंदति नमंसइ २ त्ता एवं वदासी–*

*पुव्विंपिय णं मए समणस्स ३ अंतिए सव्वे पाणाइवाए पच्चक्खाए मुसावाए अदिन्नादाणे मेहुणे परिग्गहे कोहे माणे माया लोभे पेज्जे दोसे कलहे अब्भक्खाणे पेसुन्ने परपरिवाए अरतिरति मायामोसे मिच्छादंसणसल्ले पच्चक्खाते, इयाणिंपि णं अहं तस्सेव अंतिए सव्वं पाणातिवायं पच्चक्खामि जाव मिच्छादंसणसल्लं पच्चक्खामि, सव्वं असनपानखादिमसातिमं चउव्विहंपि आहारं पच्चक्खामि जावज्जीवाए, जंपि य इमं सरीरं इट्ठं कंतं पियं जाव विविहा रोगायंका परीसहोवसग्गा फुसंतीतिकट्टु एयंपिय णं चरमेहिं ऊसासनिस्सासेहिं वोसिरामित्तिकट्टु संलेहणाझूसणाझूसिए भत्तपाणपडिया- इक्खिए पाओवगए कालं अनवकंखमाणे विहरति, तते णं ते थेरा भगवंतो मेहस्स अनगारस्स अगिलाए वेयावडियं करेंति।*

*तते णं से मेहे अणगारे समणस्स भगवओ महावीरस्स तहारूवाणं थेराणं अंतिए सामाइय-माइयाइं एक्कारस अंगाइं अहिज्जित्ता बहुपडिपुन्नाइं दुवालस वरिसाइं सामन्नपरियागं पाउणित्ता मासियाए संलेहणाए अप्पाणं झोसेत्ता सट्ठिं भत्ताइं अणसणाए छेदेत्ता आलोतियपडिक्कंते उद्धियसल्ले समाहिपत्ते आनुपुव्वेणं कालगए,*

*तते णं ते थेरा भगवंतो मेहं अनगारं आनुपुव्वेणं कालगयं पासेंति २ परिनिव्वाणवतियं काउस्सगं करेंति २ मेहस्स आयारभंडयं गेण्हंति २ विउलाओ पव्वयाओ सणियं २ पच्चोरुहंति २ जेणामेव गुणसिलए चेइए जेणामेव समणे भगवं महावीरे तेणनमेव उवागच्छंति २ त्ता समणं ३ वंदंति नमंसंति २ त्ता एवं वयासी– एवं खलु देवाणुप्पियाणं अंतेवासी मेहे नामं अनगारे पगइभद्दए जाव विनीते से णं देवाणुप्पिएहिं अब्भणुन्नाए समाणे गोतमातिए समणे निग्गंथे निग्गंथीओ य खामेत्ता अम्हेहिं सद्धिं विउलं पव्वयं सणियं २ दुरूहति २ सयमेव मेघघणसन्निगासं पुढविसिलं पट्टयं पडिलेहेति २ भत्तपाणपडियाइक्खित्ते अनुपुव्वेणं कालगए, एस णं देवाणुप्पिया मेहस्स अनगारस्स आयारभंडए।*

**वृ.** 'उरालेण'मित्यादि, उरालेन–प्रधानेन विपुलेन–बहुदिनत्वाद्विस्तीर्णेन सश्रीकेण–सशोभेन 'पयत्तेणं'ति गुरुणा प्रदत्तेन प्रयत्नवता वा प्रमादरहितेनेत्यर्थः प्रगृहीतेन–बहुमान-प्रकर्षाद्गृहीतेन कल्याणेन–नीरोगताकरणेन शिवेन शिवहेतुत्वात् धन्येन धनावहत्वात् मङ्गल्येन दुरितोपशमे साधुत्वात् उदग्रेण–तीव्रेण उदारेण–औदार्यवता निःस्पृहत्वातिरेकात् 'उत्तमेणं'ति ऊर्द्ध तमसः–अज्ञानधत्तत्तथा तेन अज्ञानरहितेनेत्यर्थः महानुभागेनअचिन्त्यसामर्थ्येन शुष्को नीरसशरीरत्वात, 'भुक्खे'त्ति बुभुक्षुवशेन रूक्षीभूतत्वात् किटिकिटिका–निर्मांसास्थिसम्बन्धी उपवेशनादिक्रियाभावी शब्दविशेषः तां भूतः–प्राप्तो यः स तथा, अस्थीनि चर्मणाऽवनद्धानि यस्य स तथा, कृशो–दुर्बलो धमनीसन्ततः–नाडीव्याप्तो जातश्चाप्यभूत,

'जीवंजीवेणं गच्छति' जीवबलेन शरीरबलेनेत्यर्थः 'भासं भासित्ता' इत्यादौ कालत्रयनिर्देशः 'गिलायति' त्ति ग्लायति ग्लानो भवति 'से' इति अथार्थः अथशब्दश्च वाक्योपक्षेपार्थः यथा दृष्टान्तार्थः

नामेति संभावनायां एवेति वाक्यालङ्कारे अङ्गाराणां भृता शकटिका—गन्त्री अङ्गारशकटिका, एवं काष्ठानां पत्राणां पर्णानां 'तिल'त्ति तिलदण्डकानां, एरण्डशटिका—एरण्डकाष्ठमयी, आतपे दत्ता शुष्का सतीति विशेषणद्वयं आर्द्रकाष्ठपत्रभृतायाः तस्या न (शब्दः) संभवति, इतिशब्द उपप्रदर्शनार्थः वाशब्दा विकल्पार्थाः, सशब्दं गच्छति तिष्ठति वा,

एवमेव मेघोऽनगारः सशब्दं गच्छति सशब्दं तिष्ठति हुताशन इव भस्मराशिप्रतिच्छन्नः, 'तवेणं' ति तपोलक्षणेन तेजसा, अयमभिप्रायो—यथा भस्मच्छन्नोऽग्निर्बहिर्वृत्त्या तेजोरहितोऽन्तर्वृत्त्या तु ज्वलति एवं मेघोऽनगारोऽपि बहिर्वृत्त्याऽपचितमांसादित्वान्निस्तेजा अन्तर्वृत्त्या तु शुभध्यानतपसा ज्वलतीति, उक्तमेवाह—तपस्तेजःश्रिया अतीवातीव उपशोभमानः २ तिष्ठतीति

'तं अत्थि ता मे'त्ति तदेवमस्ति तावन्मे उत्थानादि न सर्वथा क्षीणं तदिति भावः 'तं जाव ता मे'त्ति तत्—तस्मात् यावन्मेऽस्ति उत्थानादि ता इति भाषामात्रेण यावच्च मे धर्माचार्यः 'सुहत्थी'त्ति पुरुषवरगन्धहस्ती शुभाः वा क्षायिकज्ञानादयोऽर्था यस्य स तथा 'ताव ताव'त्ति तावच्च तावच्चेति वस्तुद्वयापेक्षा द्विरुक्तिः 'कडाईहिं'ति कृतयोग्यादिभिः, 'मेहघणसन्निगासं'ति घनमेघसदृशं कालमित्यर्थः, 'भत्तपाणपडियाइक्खियस्स'त्ति प्रत्याख्यातभक्तपानस्य, 'कालं'ति मरणं 'जेणेव इहं'ति इहशब्दविषयं स्थानं इदमित्यर्थः, 'संपलियंकनिसण्णे'त्ति पद्मासनसन्निविष्टः 'पेज्जे'त्ति अभिष्वङ्गमात्रं 'दोस'त्ति अप्रीतिमात्रं अभ्याख्यानं—असद्दोषारोपणं पैशून्यं—पिशुनकर्म्म परपरिवादः—विप्रकीर्णपरदोषकथा अरतिरती धर्माधर्माक्षेपु मायामृषा—वेषान्तरकरणतो लोकविप्रतारणं संलेखनां—कषायशरीरकृशतां स्पृशतीति संलेखनास्पर्शकः, पाठान्तरेण 'संलेहणाझूसणाझूसिय'त्ति संलेखनासेवनाजुष्टः इत्यर्थः ।

'मासियाए'त्ति मासिक्या मासपरिमाणया 'अप्पाणं झूसित्ते'त्ति क्षपयित्वा षष्टिं भक्तानि 'अणसणाए'त्ति अनशनेन छित्त्वा—व्यवच्छेद्य,स किल दिने २ द्वे द्वे भोजने लोकः कुरुते एवं च त्रिंशता दीनैः षष्टिर्भक्तानां परित्यक्ता भवतीति, 'परिनिव्वाणवत्तिय'त्ति परिनिर्वाणमुपरतिर्मणमित्यर्थः तत्प्रत्ययो—निमित्तं यस्य स परिनिर्वाणप्रत्ययः मृतकपरिष्ठापनाका- योत्सर्गइत्यर्थः, तं कायोत्सर्गं कुर्वन्ति, 'आयारभंडगं'ति आचाराय—ज्ञानादिभेदभिन्नाय भाण्डकं—उपकरणं वर्षाकल्पादि आचारभाण्डकं, 'पगइभद्दए'इत्यत्र यावत्करणादेवं दृश्यं 'पगइउवसन्ते पगइपयणुकोहमाणमायालोभे मिउमद्दवसंपन्ने आलीणे भद्दए विणीए'त्ति तत्र प्रकृत्यैव—स्वभावेनैव भद्रकः—अनुकूलवृत्तिः प्रकृत्यैवोपशान्तः—उपशान्ताकारः, मृदु च तन्मार्दवं च मृदुमार्दवं—अत्यन्तमार्दवं इत्यर्थः, आलीनः—आश्रितो गुर्वनुशासनेऽपि सुभद्रक एव यः स तथा—

*मू. (४१) भंतेति भगवं गोतमे समणं ३ वंदति नमंसति २ त्ता एवं वदासी—एवं खलु देवाणुप्पियाणं अंतेवासी मेहे नामं अनागारे से णं भंते ! मेहे अनगारे कालमासे कालं किच्चा कहिं गए कहिं उववन्ने ?, गोतमादि समणे भगवं महावीरे भगवं गोयमं एवं वयासी—*

*एवं खलु गोयमा ! मम अंतेवासी मेहे नामं अनगारे पगतिभद्दए जाव विनीए से णं तहारूवाणं थेराणं अंतिए सामाइयमाइयातिं एक्कारस अंगातिं अहिज्जति २ बारस भिक्खुपडिमाओ गुणरयणसंवच्छरं तवोकम्मं काएणं फासेत्ता जाव किट्टेत्ता मए अब्भणुन्नाए समाणे गोयमाइ थेरे खामेइ २ तहारूवेहिं जाव विउलं पव्वयं दुरुहति २ दब्भसंथारगं संथरति २ दब्भसंथरोवगए*

*—सयमेव पंच महव्वए उच्चारेइ बार, वासतिं सामण्णपरियायं पाउणित्ता मासियाए*

*संलेहणाए अप्पाणं झूसित्ता सट्ठिं भत्तातिं अणसणाए छेदेत्ता आलोइयपडिक्कंते उद्धियसल्ले समाहिपत्ते कालमासे कालं किच्चा उद्धं चंदिमसूरगहगणनक्खत्ततारारूवाणं बहूइं जोयणाइं बहूइं जोयणसयाइं बहूइं जोयणसहेस्साइं बहूइं जोयणसयसहस्साइं बहूइ जोयणकोडीओ बहूइ जोअणकोडाकोडीओ उड्ढं दूरं उप्पइत्ता सोहंमीसाणसणंकुमारमाहिंदबंभलंतगमहासुक्कसहस्साराणयपाणयारणच्चुते तिन्निय अट्ठारसुत्तरे गेवेज्जविमाणावाससए वीइवइत्ता विजए महाविमाणे देवत्ताए उववन्ने,*

*तत्थ णं अत्थेगइयाणं देवाणं तेत्तीसं सागरोवमाइं ठिई पन्नत्ता, तत्थ णं मेहस्सवि देवस्स तेत्तीसं सागरोवमातिं ठिती पं०, एस णं भंते! मेहे देवे ताओ देवलोयाओ आउक्खएणं ठितिक्खएणं भवक्खएणं अनंतरं चयं चइत्ता कहिं गच्छिहिति कहिं उववज्जिहिति ?,*

*गो० ! महाविदेहे वासे सिज्झिहिति बुज्झिहिति मुच्चिहिति परिनिव्वाहिति सव्वदुक्खाणमंतं काहिति । एवं खलु जंबू ! समणेणं भगवया महावीरेणं आइगरेणं तित्थगरेणं जाव संपत्तेणं अप्पोपालंभनिमित्त पढमस्स नायज्झयणस्स अयमट्ठे पन्नत्ते तिबेमि ।*

**वृ.** 'कहिं गए' त्ति कस्यां गतौ गतः ?

क्वच देवलोकादौ उत्पन्नो ? जातः, विजयविमानमनुत्तरविमानानां प्रथमं पूर्वदिग्भागवर्त्ति, तत्रोत्कृष्टादिस्थितेर्भावादाह 'तत्थे'त्यादि, आयुःक्षयेण-आयुर्दलिकनिर्जरणेन स्थितिक्षयेण-आयुःकर्मणः स्थितेर्वेदनेन भवक्षयेण-देवभवनिबन्धभूतकर्मणां गत्यादीनां निर्जरणेनेति ।

अनन्तरं देवभवसम्बन्धि चयं-शरीरं 'चइत्त'त्ति त्यक्त्वा अथवा च्यवं-च्यवनं कृत्वा सेत्स्यति निष्ठितार्थतया विशेषतः सिद्धिगमनयोग्यतया महर्द्धिप्राप्तया वा भोत्स्यते केवलालोकेन मोक्ष्यते सकलकर्मांशैः परिनिर्वास्यतिस्वस्थो भविष्यति सकलकर्मकृतविकारविरहिततया, किमुक्तं भवति ? -सर्वदुःखानामन्तं करिष्यतीति । 'एवं खल्वि' त्यादि निगमनं 'अप्पोपालंभनिमित्तं' आप्तेन हितेन गुरुणेत्यर्थः उपालम्भो-विनेयस्याविहितविधायिनः आप्तोपालम्भः स निमित्तं यस्य प्रज्ञापनस्य तत्तथा ।

प्रथमस्य ज्ञाताध्ययनस्यां-अनन्तरोदितः मेघकुमारचरितलक्षणोऽर्थोऽभिधेयः प्रज्ञप्तः-अभिहितः अविधिप्रवृत्तस्य शिष्यस्य गुरुणा मार्गे स्थापनाय उपालम्भो देयो यथा भगवता दत्तो मेघकुमारायेत्येवमर्थं प्रथममध्ययनमित्यभिप्रायः । इह गाथा-

॥ १ ॥ महुरेहिं निउणेहिं वयणेहिं चोययंति आयरिया ।
सीसे कहिंचि खलिए जह मेहमुणिं महावीरो ॥

इतिशब्दः समाप्तौ, ब्रवीमीति-प्रतिपादयाम्येतदहं तीर्थकरोपदेशेन, न स्वकीयबुद्धया, इत्येवं गुरुवचनपारतन्त्र्यं सुधर्मस्वामी आत्मनो जम्बूस्वामिने प्रतिपादयति, एवमन्येनापि मुमुक्षणा भवितव्यमित्येतदुपदर्शनार्थमिति ।

अध्ययनं- १ -समाप्तम्

**मुनि दीपरत्नसागरेण संशोधिता सम्पादीता ज्ञाताधर्मकथाङ्गसूत्रे**
**प्रथमे श्रुतस्कन्धे प्रथम अध्ययनस्य अभयदेवसूरि विरचिता टीका परीसमाप्ता**

## अध्ययनं – २ – संघाटः

वृ. अस्य च पूर्वेण सहायं सम्बन्धः, पूर्वस्मिन्ननुचितप्रवृत्तिकस्य शिष्यस्य उपालम्भ उक्तः, इह त्वनुचितप्रवृत्तिकोचितप्रवृत्तिकयोरनर्थार्थप्राप्तिपरम्पराऽभिधीयते इत्येवंसम्बन्धस्यास्येदमुपक्षेपसूत्रं—

*मू. (४२) जति णं भंते ! समणेणं भगवया महावीरेणं पढमस्स नायज्झयणस्स अयमट्ठे पन्नत्ते बितीयस्स णं भंते ! नायज्झयणस्स के अट्ठे पन्नत्ते ?, एवं खलु जंबू ! तेणं कालेणं तेणं समएणं रायगिहे नामं नयरे होत्था वन्नओ, तस्स णं रायगिहस्स नगरस्स बहिया उत्तरपुरच्छिमे दिसीभाए गुणसिलए नामं चेतिए होत्था वन्नओ, तस्स णं गुणसिलयस्स चेतियस्स अदूरसामंते एत्थ णं महं एगे जिण्णुज्जाणे यावि होत्था विणट्ठदेवउले परिसडियतोरणघरे नाणाविहगुच्छगुम्मलयावल्लिवच्छच्छाइए अनेगवालसयसंकणिज्जे यावि होत्था,*

*तस्स णं जिन्नुज्जाणस्स बहुमज्झदेसभाए एत्थ णं महं एगे भग्गकूवए यावि होत्था, तस्स णं भग्गकूवस्स अदूरसामंते एत्थ णं महं एगे मालुयाकच्छए यावि होत्था,*

*किण्हे किण्होभासे जाव रम्मे महामेहनिउरंबभूते बहूहिं रुक्खेहि य गुच्छेहि य गुम्मेहि य लयाहि य वल्लीहि य कुसेहि य खाणुएहि य संच्छन्ने पलिच्छन्ने अंतो झुसिरे बाहिं गंभीरे अनेगवालसयसंकणिज्जे यावि होत्था ।*

वृ. 'जइ ण'मित्यादि, कण्ठ्यं 'एवं खल्वि'त्यादि तु प्रकृताध्ययनार्थसूत्रं सुगमं चैतत्सर्वं नवरं जीर्णोद्यानं चाप्यभूत्, चापीति समुच्चये अपिचेत्यादिवत्, विनष्टानि देवकुलानि परिसटितानि तोरणानि प्राकारद्वारदेवकुलसम्बन्धीनि गृहाणि च यत्र तत्तथा, नानाविधा ये गुच्छा–वृन्ताकीप्रभृतयः गुल्मा–वंशजालीप्रभृतयाः लताः–अशोकलतादयः वल्ल्यः–त्रपुषीप्रभृतयः वृक्षाः–सहकारादयः तैः छादितं यत्तत्तथा, अनेकैर्व्यालशतैः–श्वापदशतैः शङ्कनीयं–भयजनकं चाप्यभूत्, शङ्कनीयमित्येद्विशेषणसम्बन्धत्वात्क्रियावचनस्य न पुनरुक्तता–

–मालुकाकच्छए'त्ति एकास्थिफलाः वृक्षविशेषाः मालुकाःप्रज्ञापना- भिहितास्तेषां कक्षो–गहनं मालुकाकक्षः, चिरर्भिटकाकच्छक इति तु जीवाभिगमचूर्णिकारः । 'किण्हे किण्होभासे' इह यावत्करणादिदं दृश्यं, ''नीले नीलोभासे, हरिए हरिओभासे सीए सीओभासे निद्धे निद्धोभासे तिव्वे तिव्वोभासे किण्हे किण्हच्छाए नीले नीलच्छाए हरिए हरियच्छाए सीये सीयच्छाए निद्धे निद्धच्छाए तिव्वे तिव्वच्छाए घणकडियडच्छाए''त्ति कृष्णः–कृष्णवर्णः अञ्जनवत् स्वरूपेण कृष्णवर्ण एवावभासते–द्रष्टृणां प्रतिभातीति कृष्णावभासः, किल किञ्चिद्वस्तु स्वरूपेण भवत्यन्यादृशं प्रतिभासते तु सन्निधानविप्रकर्षादिः कारणादन्यादृशमिति ।

एवं क्वचिदसौ नीलो मयूरग्रीवेव क्वचित् हरितः शुकपिच्छवत्, हरितालाभ इति वृद्धाः, तथा शीतः स्पर्शतः वल्ल्याद्याक्रान्तत्वादिति च वृद्धाः, स्निग्धो न रूक्षः तीव्रो वर्णादिगुणप्रकर्षवान् तथा कृष्णः सन् वर्णतः कृष्णच्छायः, छाया च–दीप्तिरादित्य-करावरणजनिता चेति, एवमन्यत्रापि 'घणकडियडच्छाए'त्ति अन्योऽन्यशाखाप्रशाखानुप्रवेशात् घननिरन्तरच्छायो रम्यो महामेघानां निकुरम्बःसमूहस्तद्वद् यः स महामेघनिकुरम्बभूतः

वाचनान्तरे त्विदमधिकं पठ्यते—'पत्तिए पुप्फिए फलिए हरियगरेरिज्झमाणे' हरितकश्चासौ रेरिज्झमाणेत्ति—भृशं राजमानश्च यः स तथा ''सिरीए अईव २ उवसोभेमाणे चिट्ठइ'त्ति श्रिया—वनलक्ष्म्या अतीव २ उपशोभमानस्तिष्ठति 'कुसेहि य'त्ति दर्भैः क्वचित् 'कूविएहि य'त्ति पाठः तत्र कूपिकाभिः लिङ्गव्यात्ययात् 'खाणुएहिं'न्ति स्थाणुभिश्च पाठान्तरेण 'खत्तएहिं'ति खातैर्गर्तैरित्यर्थः, अथवा 'कुविएहिं'ति चोरगवेषकैः 'खत्तएहिं'ति खातकैः क्षेत्रस्येति गम्यते चौरैरित्यर्थः, अयमभिप्रायो—गहनत्वात् तस्य तत्र चौराः प्रविशन्ति तद्गवेषणार्थमितरे चेति, संछन्नो—व्याप्तः परिच्छन्नः—समन्तात् अन्तः मध्ये शुषिरः सावकाशत्वात् बहिर्गभीरो दृष्टेरप्रक्रमणात्

मू. (४३) *तत्थ णं रायगिहे नगरे धन्ने नामं सत्थवाहे अड्ढे दित्ते जाव विउलभत्तपाणे, तस्स णं धन्नस्स सत्थवाहस्स भद्दा नामं भारिया होत्था सुकुमालपाणिपाया अहीणपडिपुन्न-पंचिंदियसरीरा लक्खणवंजणगुणोववेया माणुम्माणप्पमाणपडिपुन्नसुजातसव्वंगसुंदरंगी —ससिसोमागारा कंता पियदंसणा सुरूवा करयलपरिमियतिवलियमज्झा कुंडलुल्लिहिय-गंडलेहा कोमुदिरयणियरपडिपुण्णसोमवयणा सिंगारागारचारुवेसा जाव पडिरूवा वंझा अवियाउरी जाणुकोप्परमाया यावि होत्था।*

वृ. 'अड्ढे दित्ते' इह यावत्करणादिदं द्रष्टव्यं ''विच्छिन्नविउलभवणसयणासण-जाणवाहणाइन्ने बहुदासदासीगोमहिसमवेलप्पभूए बहुधणबहुजायरूवरयए आओगपओगसंपउत्ते विच्छड्डियविउलभत्तपाणे''त्ति व्याख्या त्वस्य मेघकुमारराजवर्णकवत् भद्रावर्णकस्य तु धारिणीवर्णकवन्नवरं 'करयल'त्ति अनेन करयलपरिमियतिवलियमज्झा इति दृश्यं 'वंझ'त्ति अपत्यफलापेक्षया निष्फला 'अवियाउरि'त्ति प्रसवानन्तरमपत्यमरणेनापि फलतो वन्ध्या भवतीत्यत उच्यते—अवियाउरिति—अविनलनशीला अपत्यानामत एवाह—जानुकूर्पराणामेव माता—जननी जानुकूर्प्परमाता, एतान्येव शरीरांशभूतानि तस्याः स्तनौ स्पृशन्ति नापत्यमित्यर्थः, अथवा जानुकूर्पराण्येव मात्रा—परप्रणोदे साहाय्ये समर्थ उत्सङ्गनिवेशनीयो वा परिकरो यस्या न पुत्रलक्षणः सा जानुकूर्परमात्रा।

मू. (४४) *तस्स णं धन्नस्स सत्थवाहस्स पंथए नाम दासचेडे होत्था सव्वंगसुंदरंगे मंसोवचिते बालकीलावणकुसले यावि होत्था,*

*तते णं से धन्ने सत्थवाहे रायगिहे नयरे बहूणं नगरनिगमसेट्ठिसत्थवाहाणं अट्ठारसण्हं य सेणियप्पसेणीणं बहुसु कज्जेसुय कुडुंबेसु य मंतेसु य जाव चक्खुभूते यावि होत्था, नियगस्सवि य णं कुडुंबस्स बहुसु य कज्जेसु जाव चक्खुभूते यावि होत्था*

वृ. 'दासचेडे'त्ति दासस्य—भृतकविशेषस्य चेटः—कुमारकः दासचेटः'' अथवा दासश्चासौ चेटश्चेति दासचेटः।

मू. (४५) *तत्थ णं रायगिहे नगरे वजए नामं तक्करे होत्था, पावे चंडालरूवे भीमतररुद्दकम्मे आरुसियदित्तरत्तनयणे खरफरुसमहल्लविगयबीभत्थदाढिए असंपुडितउट्ठे उद्धुयपइन्नलंबंतमुद्धए भमरराहुवन्ने निरणुक्कोसे निरणुतावे दारुणे पइभए निसंसतिए निरनुकंपे अहिव्व एगंतदिट्ठिए खुरेव एगंतधाराए गिद्धेव आमिसतल्लिच्छे अग्गिमिव सव्वभक्खे जलमिव सव्वगाही*

*उक्कंचणवंचणमायानियडिकूडकवडसाइसंपओगबहुले चिरनगरविणट्ठदुट्ठसीलायारचरित्ते*

*—जूयपसंगी मज्जपसंगी भोज्जपसंगी मंसपसंगी दारुणे हिययदारए साहसिए संधिच्छेयए उवहिए विस्संभघाती आलीयगतित्थभेयलहुहत्थसंपउत्ते परस्स दव्वहरणंमि निच्चं अणुबद्धे तिव्ववेरे रायगिहस्स नगरस्स बहूणि अइगमणाणि य निग्गमणाणि य दाराणि य अवदाराणि य छिंडिओ य खंडओ य नगरनिद्धमणाणि य संवट्टणाणि य निव्वट्टणाणि य जूयखलयाणि य पाणागाराणि य वेसागाराणि य तद्दारट्ठाणाणि य तक्करट्ठाणाणि य तक्करघराणि य सिंगाडगाणि य तियाणि य चउक्काणि य चच्चराणि य नागघराणि य भूयघराणि य जक्खदेउलाणि य सभाणि य पवाणि य पणियसालाणि य सुन्नघराणि य आभोएमाणे २ मग्गमाओ गवेसमाणे बहुजणस्स छिद्देसु य विसमेसु य विहुरेसु य वसणेसु य अब्भुदएसु य उस्सवेसु य पसवेसु य तिहीसु य छणेसु य जन्नेसु य पव्वणीसु य मत्तपमत्तस्स य वक्खित्तस्स य वाउलस्स य सुहितस्स य दुक्खियस्स विदेसत्थस्स य विप्पवसियस्स य मग्गं च छिद्दं च विरहं च अंतरं च मग्गमाणे गवेसमाणे एवं च णं विहरति,*

*बहियावि य णं रायगिहस्स नगरस्स आरामेसु य उज्जानेसु य वाविपोक्खरणीदिहि-यागुंजालियासरेसु य सरपंतिसु य सरसपंतियासु य जिण्णुज्जाणेसु य भग्गकूवएसु य मालुयाकच्छएसु य सुसाणएसु य गिरिकंदरलेणउवट्ठाणेसु य बहुजणस्स छिद्देसु य जाव एवं च णं विहरति ।*

**वृ.** 'तक्करे'त्ति चौरः 'पापस्य' पापकर्मकारिणः चाण्डालस्येव रूपं—स्वभावो यस्य स तथा, चण्डालकमपेक्षया भीमतराणि रौद्राणि कर्म्माणि यस्य स तथा, 'आरुसिय'त्ति आरुष्टस्येव दीप्ते—रक्ते नयने यस्य स तथा, खरपरुषे—अतिकर्कशे महत्यौ विकृते बीभत्से दंष्ट्रिके—उत्तरोष्ठकेश-गुच्छरूपे दंशनविशेषरूपे वा यस्य स तथा, असंपुटितौ असंवृतौ वा परस्परालाभौ तुच्छत्वाद्दशन दीर्घत्वाच्च औष्ठौ यस्य स तथा उद्धूता—वायुना प्रकीर्णा लम्बमाना मूर्द्धजा यस्य स तथा, भ्रमरराहुवर्णः कृष्ण इत्यर्थः, 'निरनुक्रोशो' निर्दयो 'निरनुतापः' पश्चात्तापरहितः अत एव 'दारुणो' रौद्रः

अत एव 'प्रतिभयो' भयजनकः 'निःसंशयिकः' शौर्यातिशयादेव तत्साधयिष्याम्येवेत्येवं-प्रवृत्तिकः पाठान्तरे 'निसंसे'त्ति नृन्—नारान् शंसति—हिनस्तीति नृशंसः निःशंसो वा—विगतश्लाघः, 'निरनुकंपे'त्ति विगतप्राणिरक्षः निर्गता वा जनानामनुकम्पा यत्र स तथा, अहिरिव एकान्त-ग्राह्यमेवेदं मयेत्यवेमेवनिश्चया दृष्टिर्यस्य स तथा खुरेव एगंतधाराए'त्ति एकत्रान्ते—वस्तुभागेऽपहर्तव्यलक्षणे धारा परोपतापप्रधानवृत्तिलक्षणा यस्य स तथा, यथा क्षुरप्रः एकधारः, मोषतलक्षणै-कप्रवृत्तिक एवेति भावः,

'जलमिव सव्वगाहि' त्ति यथा जलं सर्वं स्वविषयापन्नमभ्यन्तरीकरोति तथाऽयमपि सर्वं गृह्णातीति भावः, तथा उत्कञ्चनवञ्चनमायानिकृतिकूटकपटैः सह योऽतिसंप्रयोगोगाध्येन बहुलः—प्रचुरो यः स तथा, तत्र ऊर्द्ध्वकञ्चनं मूल्याधारोपणार्थं उत्कञ्चनं हीनगुणस्य गुणोत्कर्षप्रति-पादनमित्यर्थः वञ्चनं—प्रतारणं माया—परवञ्चनबुद्धिः निकृतिः—बकवृत्त्या गलकर्तकानामिवावस्थानं कूटं—कार्षापणतुलादेः परवञ्चनार्थं न्यूनाधिककरणं कपटं—नेपथ्यभाषाविपर्ययकरणं एभिरुत्कञ्चनादिभिस्सहातिशयेन यः संप्रयोगो—योगस्तेन यो बहुलः स तथा, यदिवा सातिशयेन द्रव्येण कस्तूरिकादिना परस्य द्रव्यस्य संप्रयोगः सातिसंप्रयोगः, ततश्चोत्कञ्चनादिभिः साति-संप्रयोगेण च यो बहुलः स तथा, उक्तं च सातिप्रयोगशब्दार्थाय—

॥ १ ॥ "सो होइ साइजोगो दव्वं जं छुहिय अन्नदव्वेसु ।
दोसगुणा वयणेसु य अत्थविसंवायणं कुणि ॥ त्ति"

एकीयं व्याख्यानं, व्याख्यानान्तरं पुनरेवं—उत्कोचनं उत्कोचः निकृतिः—वञ्चनप्रच्छादनार्थं कर्म सातिः—अविश्रम्भः एतत्संप्रयोगे बहुलः, शेषं तथैव, चिरं—बहुकालं यावत् नगरे नगरस्य वा विनष्टो—विप्लुतःचिरनगरविनष्टः, बहुकालीनो यो नगरविनष्टो भवति स किलात्यन्तं धूर्तो भवतीत्येवं विशेषितः, तथा दुष्टं शीलं—स्वभावः आकारः—आकृतिश्चरित्रं च—अनुष्ठानं यस्य स तथा ततः कर्मधारयः, द्यूतप्रसङ्गी—द्यूतासक्तः एवमितराणि, नवरं भोज्यानि—खण्डखाद्यादीनि, पुनर्दारुणग्रहणं हृदयदारक इत्यस्य विशेषणार्थत्वान्न पुनरुक्तं, लोकानां हृदयानि दारयति—स्फोटयतीति हृदयदारकः, पाठान्तरेण 'जणहियकारए' जनहितस्याकर्त्तेत्यर्थः, 'साहसिकः' अवितर्कितकारी 'सन्धिच्छेदकः' क्षेत्रखानकः 'उपधिको' मायित्वेन प्रच्छन्नचारी 'विश्रम्भघाती' विश्वासघातकः आदीपकः—अग्निदाता तीर्थानि—तीर्थभूतदेवद्रोण्यादीनि भिनत्ति—द्विधा करोति तद्द्रव्यमोषणाय तत्परिकरभेदनेनेति तीर्थभेदः, लघुभ्यां—क्रियासु दक्षाभ्यां हस्ताभ्यां संप्रयुक्तो यः स तथा, ततः पदत्रयस्य कर्मधारयः, परस्य द्रव्यहरणे नित्यमनुबद्धः प्रतिबद्ध इत्यर्थः,

—'तीव्रवैरः' अनुबद्धविरोधः 'अतिगमनानि' प्रवेशमार्गान् 'निर्गमनानि' निस्सरणमार्गान् 'द्वाराणि' प्रतोल्यः 'अपरद्वाराणि' द्वारिकाः 'छिण्डीः' छिण्डीकाः—वृत्तिच्छिद्ररूपाः 'खण्डीः' प्राकारच्छिद्ररूपाः नगरनिर्द्धमनानि—नगरजलनिर्गमक्षालान् 'संवर्तनानि' मार्गमिलनस्थानानि 'निवर्तनानि' मार्गनिर्घटनस्थानानि 'द्यूतखलकानि' द्यूतस्थण्डिलानि 'पानागाराणि' मद्यगेहानि 'वेश्यागाराणि' वेश्याभवनानि 'तस्करस्थानानि' शून्यदेवकुलागारादीनि 'तस्करगृहाणि' तस्करनिवासान् शृङ्गाटकादीनि प्राग् व्याख्यातानि सभाः—जनोपवेशनस्थानानि प्रपाः—जलस्थानानि, लिङ्गव्यत्ययश्च प्राकृतत्वात्, 'पणितशालाः' हट्टान् शून्यगृहाणि—प्रतीतानि 'आभोगयन्' पश्यन् 'मार्गयन्' अन्वयधर्म्मपर्यालोचनतः 'गवेषयन्' व्यतिरेकधर्म्मपर्यालोचनतः बहुजनस्य 'छिद्रेषु' प्रविरलपरिवारत्वादिषु चौरप्रवेशावकाशेषु

—'विषमेषु' तीव्ररोगादिजनितातुरत्वेषु 'विधुरेषु' इष्टजनवियोगेषु 'व्यसनेषु' राज्याद्युपप्लवेषु तथा 'अभ्युदयेषु' राज्यलक्ष्म्यादिलाभेषु 'उत्सवेषु' इन्द्रोत्सवादिषु 'प्रसवेषु' पुत्रादिजन्मसु 'तिथिषु' मदनत्रयोदश्यादिषु 'क्षणेषु' बहुलोकभोजनदानादिरूपेषु 'यज्ञेषु' नागादिपूजासु 'पर्वणीषु' कौमुदी-प्रभृतिषु अधिकरणभूतासु मत्तः पीतमद्यतया प्रमत्तश्च प्रमादवान् यः स तथा तस्य बहुजनस्येति योगः, 'व्याक्षिप्तस्य' प्रयोजनान्तरोपयुक्तस्य व्याकुलस्य च नानाविधकार्यक्षेपेण सुखितस्य दुःखितस्य च विदेशस्थस्य च—देशान्तरस्थस्य विप्रोषितस्य च—देशान्तरं गन्तुं प्रवृत्तस्य 'मार्गं च' पन्थानं 'छिद्रं च' अपद्वारं 'विरहं च' विजनं अन्तरं च—अवसरमिति आरामादिपदानि प्राग्वत् 'सुसाणेसु य' त्ति श्मशानेषु 'गिरिकन्दरेषु' गिरिरन्ध्रेषु 'लयनेषु' गिरिवर्त्तिपाषाणगृहेषु 'उपस्थानेषु' तथाविधमण्डपेषु बहुजनस्य छिद्रेष्वित्यादि पुनरावर्त्तनीयं यावद् 'एवं च णं विहरइ' त्ति ।

**मू. (४५)** *तते णं तीसे भद्दाए भारियाए अन्नया कयाइं पुव्वरत्तावरत्तकालसमयंसि कुडुंबजागरियं जागरमाणीए अयमेयारूवे अज्झत्थिए जाव समुप्पज्जित्था—अहं धन्नेन सत्यवाहेण*

सद्धिं बहूणि वासाणि सद्दफरिसरसगंधरूवाणि माणुस्सगाइं कामभोगाइं पच्चणुभवमाणी विहरामि, नो चेव णं अहं दारगं वा दारिगं वा पयायामि,

तं धन्नाओ णं ताओ अम्मयाओ जाव सुलद्धे णं माणुस्सए जम्मजीवियफले तासिं अम्मयाणं जासिं मन्ने नियगकुच्छिसंभूयातिं थणदुद्धलुद्धयातिं महुरसमुल्लावगातिं मम्मणपयंपियातिं थणमूलकक्खदेसभागं अभिसरमाणातिं मुद्धयाइं थणयं पिवंति, ततो य कोमलकमलोवमेहिं हत्थेहिं गिण्हिऊणं उच्छंगे निवेसियाइं देंति समुल्लावए पिए सुमहुरे पुणो २ मंजुलप्पभणिते, तं अहन्नं अधन्ना अपुन्ना अलक्खणा अकयपुन्ना एत्तो एगमवि न पत्ता,

—तं सेयं मम कल्लं पाउप्पभायाए रयणीए जाव जलंते धन्नं सत्थवाहं आपुच्छित्ता धन्नेनं सत्तवहेणं अब्भणुन्नाया समाणी सुबहुं विपुलं असणपणाखातिमसातिमं उवक्खडावेत्ता सुबहुं पुप्फवत्थगंधमल्लालंकारं गहाय बहूहिं मित्तनातिनियगसयणसंबंधिपरिजणमहिलाहिं सद्धिं संपरिवुडा जाइं इमाइं रायगिहस्स नगरस्स बहिया नागाणि य भूयाणि य जक्खाणि य इंदाणिय खंदाणि य रुद्दाणि य सेवाणि य वेसमणाणि य तत्थ णं बहूणणं नागपडिमाण य जाव वेसमणपडिमाण य महरिहं पुप्फच्चणियं करेत्ता जाणुपायपडियाए एवं वइत्तए —

जइ णं अहं देवाणुप्पिया ! दारगं वा दारिगं वा पयायामि तो णं अहं तुब्भं जाय च दायं च भायं च अक्खयनिहिं च अनुवड्ढेसिति कट्टु उवातियं उवाइत्तए, एवं संपेहेति २ कल्लं जाव जलंते जेणामेव धन्ने सत्थवाहे तेणामेव उवागच्छति उवागच्छित्ता एवं वदासी—एवं खलु अहं देवाणुप्पिया तुब्भेहिं सद्धिं बहूइं वासातिं जाव देंति समुल्लावए सुमहुरे पुणो २ मंजुलप्पभणिते तण्णं अहं अहन्ना अपुन्ना अकयलक्खणा एत्तो एगमवि न पत्ता, तं इच्छामि णं देवाणुप्पिया ! तुब्भेहिं अब्भणुन्नाता समाणी विपुलं असणं ४ जाव अणुवड्ढेमि उवायइयं करेत्तए तते णं धन्ने सत्थवाहे भद्दं भारियं एवं वदासी—ममंपि य णं खलु देवाणु०! एस चेव मनोरहे—कहं णं तुमं दारगं दारियं वा पयाएज्जसि ?, भद्दाए सत्थवाहीए एयमट्ठमणुजाणति,

तते णं सा भद्दा सत्थवाही धन्नेनं सत्थवाहेणं अब्भणुन्नाता समाणी हट्ठतुट्ठ जाव हयहियया विपुलं असनपानखातिमसातिमं उवक्खडावेति २ त्ता सुबहुं पुप्फगंधवत्थमल्लालंकारं गेण्हति २ सयाओ गिहाओ निग्गच्छति २ रायगिहं नगरं मज्झंमज्झेणं निग्गच्छति २ त्ता जेणेव पोक्खरिणी तेणेव उवागच्छति २ पुक्खरिणीए तीरे सुबहुं पुप्फजावमल्लालंकारं ठवेइ २ पुक्खरिणिं ओगाहइ २ जलमज्जणं करेति जलकीडं करेति २ ण्हाया कयबलिकम्मा उल्लपडसाडिगा जाइं तत्थ उप्पलाइं जाव सहस्सपत्ताइं ताइं गिण्हइ २ पुक्खरिणीओ पच्चोरुहइ २ तं सुबहुं पुप्फगंधमल्लं गेण्हति २

जेणामेव नागघरए य जाव वेसमणघरए य तेणेव उवागच्छति २ तत्थ णं नागपडिमाण य जाव वेसमणपडिमाण य आलोए पणामं करेइ ईसिं पच्चुन्नमइ २ लोमहत्थगं परामुसइ २ नागपडिमाओ य जाव वेसमणपडिमाओ य लोमहत्थेणं पमज्जति उदगधाराए अब्भुक्खेति २ पम्हलसुकुमालाए गंधकासाईए गायाइं लूहेइ २ महरिहं वत्थारुहणं च मल्लारुहणं च गंधारुहणं च चुन्नारुहणं च वन्नारुहणं च करेति २ जाव धूवं डहति २ जानुपायपडिया पंजलिउडा एवं वदासी—

जइ णं अहं दारगं वा दारिगं वा पयायामि तो णं अहं जायं च जाव अणुवड्ढेमित्ति कट्टु उवतियं करेति २ जेणेव पोक्खरिणी तेणेव उवागच्छति २ विपुलं असणं ४ आसाएमाणी जाव

विहरति, जिमिया जाव सुईभूया जेणेव सए गिहे तेणेव उवागया, अदुत्तरं च णं भद्दा सत्थवाही चाउद्दसट्ठमुद्दिट्ठपुन्नमासिणीसु विपुलं असण ४ उवक्खडेति २ बहवे नागा य जाव वेसमणा य उवायमाणी जाव एवं च णं विहरति

मू. (४७) तते णं सा भद्दा सत्थवाही अन्नया कयाइ केणति कालंतरेणं आवन्नसत्ता जाया यावि होत्था तते णं तीसे भद्दाए सत्थ० दोसु मासेसु वीतिक्कंतेसु ततिए मासे वट्टमाणे इमेयारूवे दोहले पाउब्भूते—धन्नाओ णं ताओ अम्मयाओ जाव कयलक्खणाओ णं ताओ अम्मयाओ जाओ णं विउल असणं ४ सुबहुयं पुप्फवत्थगंधमल्लालंकारं गहाय मित्तनातिनियगसयणसंबंधिपरियणमहिलियाहिं य सद्धिं संपरिवुडाओ रायगिहं नगरं मज्झंमज्झेणं निग्गच्छंति २

—जेणेव पुक्खरिणी तेणेव उवागच्छंति २ पोक्खरिणीं ओगाहिंति २ ण्हायाओ कयबलिकम्माओ सव्वालंकारविभूसियाओ विपुलं असणं ४ आसाएमाणीओ जाव पडिभुंजेमाणीओ दोहलं विणेति एवं संपेहेति २ कल्लं जाव जलंते जेणेव धन्ने सत्थवाहे तेणेव उवागच्छति २ धन्नं सत्थवाहं एवं वदासी—

एवं खलु देवाणुप्पिया ! मम तस्स गब्भस्स जाव विणेति तं इच्छामि णं देवाणुप्पिया ! तुब्भेहिं अब्भणुन्नाता समाणी जाव विहरित्तए, अहासुहंदेवाणुप्पिया ! मा पडिबंधं करेह, तते णं सा भद्दा सत्थवाही धन्नेणं सत्थवाहेणं अब्भणुन्नाया समाणी हट्ठतुट्ठ जाव विपुलं असणं ४ जाव ण्हाया जाव उल्लपडसाडगा जेणेव नागधरते जाव धूवं दहति २ पणामं करेति पणामं करेत्ता जेणेव पोक्खरिणी तेणेव उवागच्छति २ तते णं तओ मित्तनाति जाव नगरमहिलाओ भद्दं सत्थवाहिं सव्वालालंकारविभूसितं करेति, तते णं सा भद्दा सत्थवाही ताहिं मित्तनातिनियगसयणसंबंधिपरिजणणगरमहिलियाहिं सद्धिं तं विपुलं असणं ४ जाव परिभुंजमाणी य दोहलं विणेति २ जामेव दिसिं पाउब्भूता तामेव दिसिं पडिगया,

तते णं सा भद्दा सत्थवाही संपुन्नडोहला जाव तं गब्भं सुहंसुहेणं परिवहति, तते णं सा भद्दा स० नवण्हं मासाणं बहुपडिपुन्नाणं अद्धट्ठमाण राइंदियाणं सुकुमालपाणिपादं जाव दारगं पयाया, तते णं तस्स दारगस्स अम्मापियरो पढमे दिवसे जातकम्मं करेंति २ तहेव जाव विपुलं असणं ४ उवक्खडावेंति २ तहेव मित्तनाति० भोयावेत्ता अयमेयारूवं गोन्नं गुणनिप्फन्नं नामधेज्जं करेंति जम्हा णं अम्हं इमे दारए बहूणं नागपडिमाण य जाव वेसमणपडिमाणा य उवाइयलद्धे णं ते होउ णं अम्हे इमे दारए देवदिन्ननामेणं, तते णं तस्स दा० अम्मापियरो नामधिज्जं करेंति देवदिन्नेति, तते णं तस्स दा० अम्मापियरो जायं च दायं च भायं च अक्खयनिहिं च अनुवड्ढेति ।

वृ. 'कुडुंबजागरियं जागरमाणीए' ति कुटुम्बचिन्ताया जागरणं—निद्राक्षयः कुटुम्बजागरिका द्वितीयायास्तृतीयार्थत्वात् तया 'जाग्रत्या;' विबुध्यमानया, अथवा कुटुम्बजागरिकां जाग्रत्या 'पयायामि' त्ति प्रजनयामि 'यासिं मन्ने' इत्यत्र तासां सुलब्धं जन्म जीवितफलं अहं 'मन्ये' वितर्कयामि यासां निजककुक्षिसंभूतानीत्येवमक्षरघटना कार्या, निजकुक्षिसंभूतानि डिम्भरूपाणि इति गम्यते स्तनदुग्धलुब्धकानि मधुरसमुल्लापकानि मन्मनं—स्खलदजल्पितं येषां तानि तथा स्तनमूलात्कक्ष देशभागमभिसरन्ति—संचरन्ति स्तनजं पिबन्ति,

ततश्च कोमलकमलोपमाभ्यां हस्ताभ्यां गृहीत्वा उत्सङ्गे निवेशितानि ददति समुल्लापकान्

सुमधुरान्, 'एत्तो एगमवि न पत्त' त्ति इतः पूर्व एकमपि—डिम्भकविशेषणकलापादेकमपि विशेषणं न प्राप्ता, 'बहिया नागरघराणि चे' त्यादि प्रतीतं, 'जण्णुपायवडिय' त्ति जानुभ्यां पादपतिता जानुपाद-पतिता जानुनी भुवि निन्यस्य प्रणतिं गतेत्यर्थः ।

'जायं वे' त्यादि, यागं—पूजां क्षयं—पर्वदिवसादौ दानं भागं—लाभांशं अक्षयनिधिं-अव्ययं भाण्डागारं अक्षयनिधिं वा—मूलधनं येन जीर्णीभूतदेवकुलस्योद्धारः करिष्यते अक्षीणिकां वा प्रतीतां वर्द्धयामि—पूर्वकाले अल्पं सन्तं महान्तं करोमीति भावः

'उववाइयं' ति उपयाच्यते—मृग्यतेस्म यत्तत् उपयाचितं—ईप्सितं वस्तु 'उपयाचितुं' प्रार्थयितुं 'उल्लपडसाडय' त्ति स्नानेनार्द्रे पटशाटिके—उत्तरीयपरिधानवस्त्रे यस्याः सा तथा 'आलोए' त्ति दर्शने नागादिप्रतिमानां प्रणामं करोति, ततः प्रत्युन्नमति, लोमहस्तं—प्रमार्जनीकं 'परामृशति' गृह्णाति, ततस्तेन ताः प्रमार्जयति 'अब्भुक्खेइ' त्ति अभिषिञ्चति दस्त्रारोपणादीनि प्रतीतानि ।

'चाउद्दसी' त्यादौ 'उद्दिट्ठि' ति अमावस्या 'आवन्नसत्ते' ति आपन्नः—उत्पन्नः सत्त्वो—दजीवो गर्भे यस्याः सा तथा ।

**मू. (४८)** *तते णं से पंथए दासचेडए देवदिन्नस्स दारगस्स बालग्गाही जाए, देवदिन्नं दारयं कडीए गेण्हति २ बहूहिं डिंभएहि य डिंभगाहि य दारएहि य दारियाहि य कुमारियाहि य सद्धिं संपरिवुडे अभिरममाणे अभिरमति ।*

*तते णं सा भद्दा सत्थवाही अन्नया कयाइं देवदिन्नं दारयं ण्हायं कयबलिकम्मं कयकोउयमंगलपायच्छित्तं सव्वालंकारभूसियं करेति पंथयस्स दासचेडयस्स हत्थयंसि दलयति,*

*तते णं से पंथए दासचेडए भद्दाए सत्थवाहीए हत्थाओ देवदिन्नं दारगं कडिए गिण्हति २ सयातो गिहाओ पडिनिक्खमति २ बहूहिं डिंभएहि य डिंभिया हि य जाव कुमारियाहि य सद्धिं संपरिवुडे जेणेव रायमग्गे तेणेव उवागच्छइ २ देवदिन्नं दारगं एगंते ठावेति २ बहूहिं डिंभएहि य जाव कुमारियाहि य सद्धिं संपरिवुडे पमत्ते यावि होत्था विहरति,—*

*इमं च णं विजए तक्करे रायगिहस्स नगरस्स बहूणि बाराणि य अवदाराणि य तहेव जाव आभोएमाणे मग्गेमाणे गवेसेमाणे जेणेव देवदिन्ने दारए तेणेव उवागच्छइ २ देवदिन्ने दारगं सव्वालंकारविभूसियं पासति पासित्ता देवदिन्नस्स दारगस्स आभरणालंकारेसु मुच्छिए गढिए गिद्धे अज्झोववन्ने पंथयं दासचेडं पमत्तं पासति २ दिसालोयं करेति करेत्ता देवदिन्नं दारगं गेण्हति २ कक्खंसि अल्लियावेति २ उत्तरिज्जेणं पिहेइ १ सिग्घं तुरियं चवलं चेतियं रायगिहस्स नगरस्स अवदारेणं निग्गच्छति २ जेणेव जिण्णुज्जाणे जेणेव भग्गकूवए तेणेव उवागच्छति २ देवदिन्नं दारयं जीवियाओ ववरोवेति २ आभरणालंकारं गेण्हति २ देवदिन्नस्स दारगस्स सरीरगं निप्पाणं निच्चेट्ठं जीवियविप्प- जढं मग्गकूवए पक्खिवति २ जेनेव मालुयाकच्छए तेणेव उवागच्छति २ मालुयकच्छयं अणुपविसति २ निच्चले निप्फंदे तुसिणीए दिवसं खिवेमाणे चिट्ठति*

**वृ.** डिम्भदारककुमारकाणामल्पबहुबहुतरकालकृतो विशेषः मूर्च्छितो—मूढो गतविवेकचैतन्य इत्यर्थः 'ग्रथितो' लोभततन्तुभिः संदर्भितः 'गृद्ध' आकाङ्क्षवान् 'अभ्युपपन्नः' अधिकं तदेकाग्रतां गत इति, शीघ्रादीनि एकार्थिकानि शीघ्रतातिशयख्यापनार्थानि निष्प्राणं—उच्छ्वासादिरहितं निश्चेष्टं—व्यापाररहितं 'जीवविप्पजढं' ति आत्मना विप्रमुक्तं

निश्चलो–[illegible] तूष्णीको–वचनरहितः 'क्षेपयन्'प्रेरयन्

*मू. (४९) तते णं से पंथए दासचेडे तओ मुहुत्तंतरस्स जेणेव देवदिन्ने दारए ठविए तेणेव उवागच्छति २ देवदिन्नं दारगं तंसि ठाणंसि अपासमाणे रोयमाणे कंदमाणे विलवमाणे देवदिन्नदारगस्स सव्वतो समंता मग्गणगवेसणं करेइ २ देवदिन्नस्स दारगस्स कत्थइ सुतिं वा खुतं वा पउत्तिं वा अलभमाणे जेणेव सए गिहे जेणेव धन्ने सत्थवाहे तेणेव उवागच्छति २ धन्नं सत्थवाहं एवं वदासी–*

*एवं खलु सामी ! भद्दा सत्थवाही देवदिन्नं दारयं ण्हायं जाव मम हत्थंसि दलयति तते णं अहं देवदिन्नं दारयं कडीए गिण्हामि २ जाव मग्गणगवेसणं करेमि तं न नज्ञति णं सामी ! देवदिन्ने दारए केणइ हते वा अवहिए वा अवखित्ते वा पायवडिए धन्नस्स सत्थवाहस्स एतमट्ठं निवेदेति,*

*तते णं से धन्ने सत्थवाहे पंथयदासचेडयस्स एतमट्ठं सोच्चा णिसम्म तेण य महया पुत्तसोएणाभूभूते समाणे परसुणियत्तेव चंपगपायवे धसत्ति धरणीयलंसि सव्वंगेहिं सन्निवइए, तते णं से धन्ने सत्थवाहे ततो मुहुत्तंतरस्स आसत्थे पच्छागयपाणे देवदिन्नस्स दारगस्स सव्वतो समंता मग्गणगवेसणं करेति देवदिन्नस्स दारगस्स कत्थइ सुइं वा खुइं वा पउत्तिं वा अलभमाणे जेणेव सए गिहे तेणेव उवागच्छइ २ महत्थं पाहुडं गेण्हति २ जेणेव नगरगुत्तिया तेणेव उवागच्छति २ तं महत्थं पाहुडं उवणति उवणतित्ता एवं वयासी–*

*एवं खलु देवाणुप्पिया ! मम पुत्ते भद्दाए भारियाए अत्तए देवदिन्ने नाम दारए इट्ठे जाव उंबरपुप्फंपिव दुल्लहे सवणयाए किमंग पुण पासणयाए ?, तते णं सा भद्दा देवदिन्नं ण्हायं सव्वालंकारविभूसियं पंथगस्स हत्थे दलाति जाव पायवडिए तं मम निवेदेति, तं इच्छामि णं देवाणुप्पिया ! देवदिन्नदारगस्स सव्वओ समंता मग्गणगवेसणं कयं ।*

*तए णं ते नगरगोत्तिया धन्नेणं सत्थवाहेणं एवं वुत्ता समाणा सन्नद्धबद्धवम्मियकवया उप्पीलियसरासणवट्टिया जाव गहियाउहपहरणा धन्नेणं सत्थवाहेणं सद्धिं रायगिहस्स नगरस्स बहूणि अतिगमणाणि य जाव पवासु य मग्गणगवेसणं करेमाणा रायगिहाओ नगराओ पडिनिक्खमंति २ जेणेव जिण्णुज्जाणे जेणेव भग्गकूवए तेणेव उवागच्छंति २ देवदिन्नस्स दारगस्स सरीरगं निप्पाणं निच्चेट्ठं जीवविप्पजढं पासंति २ हा हा अहो अकज्जमितिकट्टु देवदिन्नं दारगं भग्गकूवाओ उत्तरेंति २ धन्नस्स सत्थवाहस्स हत्थेणं दलयंति ।*

वृ. 'श्रुतिं' वार्त्तामात्रं 'क्षुतं' तस्यैव सम्बन्धिनं शब्दं तच्चिह्नं वा 'प्रवृत्तिं' व्यक्ततरवार्त्तां नीलो मित्रादिना स्वगृहे अपहृतश्चौरेण आक्षिप्तः–उपलोभितः 'परसुनियत्तेव्व'त्ति परशुना–कुठारेण निकृत्तः–छिन्नो यः स तथा तद्वत् 'नगरगोत्तिय'त्ति नगरस्य गुप्तिं–रक्षां कुर्वन्तीति नगरगुप्तिकाः–आरक्षकाः 'सन्नद्धबद्धवम्मियकवय'त्ति सन्नद्धाः–संहननीभिः कृतसन्नाहाः बद्धाः–कसाबन्धनेन वर्मिताश्च–अङ्गरक्षीकृताः शरीरारोपणेन कवचाः–कङ्कटा यैस्ते तथा ततः कर्म्मधारयः,

अथवा वर्मितशब्दः क्वचिन्नाधीयत एव, 'उप्पीलियसरासणपट्टिया' उत्पीडिता–आक्रान्ता गुणेन शरासनं–धनुस्तल्लक्षणा पट्टिका यैस्ते तथा, अथवा उत्पीडिता–बद्धा शरासन-पट्टिका–बाहुपट्टको यैस्ते तथा, दृश्यते च धनुर्धराणां बाहौ चर्म्मपट्टबन्ध इति, इह स्थाने यावत्करणादिदं दृश्यं

"पिणद्धगेवेज्ज बद्धआविद्धविमलवरचिंधपट्ट" पिनद्धानि–परिहितानि ग्रैवेयकाणि–ग्रीवारक्षाणि यैस्ते तथा, बद्धो गाढीकरणेन आविद्धः–परिहितो मस्तके विमलो वरचिह्नपट्टो यैस्ते तथा ततः कर्मधारयः 'गहियाउहपहरणा' गृहीतान्यायुधानि प्रहरणाय– प्रहारदानाय यैस्ते तथा, अथवाऽऽयुधप्रहरणयोः क्षेप्याक्षेप्यकृतो विशेषः, 'ससक्खं'ति ससाक्षि ससाक्षिणोऽध्यक्षान् विधायेत्यर्थः ।

**मू. (५०)** *तते णं ते नगरगुत्तिया विजयस्स तक्करस्स पयमग्गमणुगच्छमाणा जेणेव मालुयाकच्छए तेणेव उवागच्छंति २ मालुयाकच्छयं अणुपविसंति २ विजयं तक्करं ससक्खं सहोढं सगेवेज्जं जीवग्गाहं गिण्हंति २ अट्ठिमुट्ठिजाणुकोप्परपहारसंभग्गमहियगत्तं करेंति २ अवउडा-बन्धणं करेंति २ देवदिन्नगस्स दारगस्स आभरणं गेण्हंति २ विजयस्स तक्करस्स गीवाए बंधंति २ मालुयाकच्छगाओ पडिनिक्खमंति २ जेणेव रायगिहे नगरे तेणेव उवागच्छंति २ रायगिहं नगरं अनुपविसंति २ रायगिहे नगरे सिंघाडगतियचउक्कचच्चरमहापहपहेसु कसप्पहारे य लयप्पहारे य छिवापहारे य निवाएमाणा २ छारं च धूलिं च कयवरं च उवरिं पक्किरमाणा २ महया २ सद्देणं उग्घोसेमाणा एवं वदंति–एस णं देवाणुप्पिया! विजए नामं तक्करे जाव गिद्धे विव आमिसभक्खी बालघायए बालमारए,*

*तं नो खलु देवाणुप्पिया! एयस्स केति राया वा रायपुत्ते वा रायमच्चे वा अवरज्झति एत्थट्ठे अप्पणो सयाति कम्माइं अवरज्झंतितिकट्टु जेणामेव चारगसाला तेणामेव उवागच्छंति २ हडिबंधणं करेंति २ भत्तपाणनिरोहं करेंति २ तिसंझं कसप्पहारे य जाव निवाएमाणा २ विहरंति,*

*तते णं से धन्ने सत्थवाहे मितनातिनियगसयणसंबंधिपरियणेणं सद्धिं रोयमाणे जाव विलवमाणे देवदिन्नस्स दारगस्स सरीरस्स महया इड्ढीसक्कारसमुदएणं निहरणं करेंति २ बहूइं लोतियातिं मयगकिच्चाइं करेंति २ केणइ कालंतरेणं अवगयसोए जाए यावि होत्था ।*

**वृ.** 'सहोढं'ति समोषं 'सगेवेज्जं' ति सह ग्रैवेयकेण–ग्रीवाबन्धनेन यथा भवति तथा गृह्णन्ति 'जीवग्गाहं गिण्हंति'त्ति जीवतीति जीवस्तं जीवन्तं गृह्णन्ति अस्थिमुष्टिजानुकूर्परास्तेषु वा ये प्रहारास्तैः संभग्नं–मथितं मोटितं–जर्जरितं गात्रं–शरीरं यस्य स तथा तं कुर्वन्ति 'अवउड-गबंधणं'ति अवझोटनेन–अवमोटनेन कृकाटिकायाः बाह्वोश्च पश्चाद्भागनयेन बन्धनं यस्य स तथा तं कुर्वन्ति 'कसप्पहारेय' त्ति वर्मताडनानि 'छिव'त्ति श्लक्ष्णः कषः 'लता' कम्बा 'बालघातकः' प्रहारदानेन 'बालमारकः' प्राणवियोजनेन ।

'रायमच्चे'त्ति राजामात्यः 'अवरज्झइ'त्ति अपराध्यति अनर्थं करोति 'नञ्चत्थ'त्ति नत्वन्य-त्रेत्यर्थः, वाचनान्तरे त्विदं नाधीयत एव, स्वकानि निरुपचरितानि नोपचारेणात्मनः सम्बन्धीनि

**मू. (५१)** *तते णं से धन्ने सत्थवाहे अन्नया कयाइं लहुसयंसि रायावराहंसि संपलत्ते जाए यावि होत्था, तते णं ते नगरगुत्तिया धन्नं सत्थवाहं गेण्हंति २ जेणेव चारगे तेणेव उवागच्छंति २ चारगं अनुपवेसंति २ विजएणं तक्करेणं सद्धिं एगयओ हडिबंधणं करेंति । तते णं सा भद्दा भारिया कल्लं जाव जलंते विपुलं असणं ४ उवक्खडेति २ भोयणपिंडए करेति २ भोयणाइं पक्खिवति लंछियमुद्दियं करेइ २ एगं च सुरभिवारिपडिपुन्नं दगवारयं करेति २ पंथयं दासचेडं सद्दावेति २ एवं वदासी– गच्छ णं तुमं देवाणुप्पिया! इमं विपुलं असणं ४ गहाय चारगसालाए धन्नस्स*

*य अहोरत्तेहि य अहासुत्ता जाव आराहिया भवइ, तयानंतरं दोच्चाए परिवाडीए चउत्थं करेंति नवरं विगइवज्जं पारेंति, एवं तच्चावि परिवाडी नवरं पारणए अलेवाडं पारेंति, एवं चउत्थावि परियाडी नवरं पारणए आयंबिलेण पारेंति, तए णं ते महब्बलपामोक्खा सत्त अणगारा खुड्डागं सीहनिक्कीलियं तवोकम्मं दोहिं संवच्छरेहिं अट्ठावीसाए अहोरत्तेहिं अहासुत्तं जाव आणाए आराहेत्ता जेणेव थेरे भगवंते तेणेव उवागच्छंति २ थेरे भगवंते वंदंति नमसंति २ एवं वयासी–इच्छामो णं भंते! महालयं सीहनिक्कीलियं तहेव जहा खुड्डागं नवरं चोत्तीसइमाओ नियत्तए एगाए परिवाडीए कालो एगेणं संवच्छरेणं छहिं मासेहिं अट्ठारसहि य अहोरत्तेहिं समप्पेति,*

*सव्वंपि सीहनिक्कीलियं छहिं वासेहिं दोहि य मासेहिं बारसहि य अहोरत्तहिं समप्पेति, तए णं ते महब्बलपामोक्खा सत्त अनगारा महालयं सीहनिक्कीलियं अहासुत्तं जाव आराहेत्ता जेणेव थेरे भगवंते तेणेव उवागच्छंति २ थेरे भगवंते वंदंति नमंसंति २ बहूणि चउत्थ जाव विहरंति, तते णं ते महब्बलपामोक्खा सत्त अनगारा तेणं ओरालेणं सुक्का भुक्खा जहा खंदओ नवरं थेरे आपुच्छित्ता सामण्णपरियागं पाउणंति २ चुलसीतिं पुव्वसयसहस्साति सव्वाउयं पालइत्ता जयंते विमाणे देवत्ताए उववन्ना।*

**वृ.** 'जाव एगराइं'ति इह यावत्करणात् 'दोमासियं तेमासियं चउम्मासियं पंचमासियं छम्मासियं सत्तमासियं पढमसत्तराइंदिय बीयसत्तराइंदियं तच्चसत्तराइंदियं अहोराइंदियं'ति द्रष्टव्यमिति, 'सीहनिक्कीलियं'ति सिंहनिष्क्रीडितमिव सिंहनिष्क्रिडितं, सिंहो हि विहरन् पश्चाद्गगमवलोकयति एवं यत्र प्राक्तनं तप आवर्त्योत्तरोत्तरं तद् विधीयते तत्तपः सिंहनिष्क्रीडितं,

तच्च द्विविधं–महत् क्षुद्रकं चेति, तत्र क्षुल्लकमनुलोमगतौ चतुर्भक्तादि विंशतितमपर्यन्तं प्रतिलोमगतौ तु विंशतितमादिकं चतुर्थान्तं, उभयं मध्येऽष्टादशकोपेतं, चतुर्थषष्ठादीनि तु एकैकवृद्धयैकोपवासादीनि, इह चत्वारि २ चतुर्थादीनि त्रीण्यष्टादशानि द्वे विंशतितमे तदेवं चतुष्पञ्चाशदधिकं शतं तपोदिनानां त्रयस्त्रिंशच्च पारणकदिनानामेवमेकस्यां परिपाट्यां षण्मासाः सप्तरात्रिन्दिवाधिका भवन्ति, प्रथमपरिपाट्यां च पारणकं सर्वकामगुणिकं, सर्वे कामगुणाः–कमनीयपर्याया विकृत्यादयो विद्यन्ते यत्र तथा, द्वितीयायां निर्विकृतं तृतीयायामलेपकारि चतुर्थ्यामार्यामाम्लमिति, प्रथमपरिपाटीप्रमाणं चतुर्गुणं सर्वप्रमाणं भवतीति

महासिंहनिष्क्रीडितमप्येवमेव भवति, नवरं चतुर्थादि चतुस्त्रिंशत्पर्यन्तं प्रत्यावृत्तौ चतुस्त्रिंशादिकं चतुर्थपर्यन्तं मध्ये द्वात्रिंशोपेतं सर्वं स्वयमूहनीयं, स्थापना चास्य 'खंदओ'त्ति भगवत्यां द्वितीयशते इहैव वा यथा मेघकुमारो वर्णितस्यता तेऽपि, नवरं 'थेर'त्ति स्कन्दको महावीरमापृष्टवानेते तु स्थविरानित्यर्थः, प्रतिदिनं द्विर्भोजनस्य प्रसिद्धत्वात् मासद्वयोपवासे विंशत्युत्तरभक्तशतविच्छेदः कृतो भवतीति, जयन्तविमानं अनुत्तरविमानपञ्चके पश्चिमदिग्वर्त्ति

**मू. (८१)** *तत्थ णं अत्थेगतियाणं देवाणं बत्तीसं सागरोवमाइं ठिती, तत्थ णं महब्बलवज्जाणं छण्हं देवाणं देसूणाइं बत्तीसं सागरोवमाइं ठिती, महब्बलस्स देवस्स पडिपुन्नाइं बत्तीसं सागरोवमाइं ठिती। तते णं ते महब्बलवज्जा छप्पिय देवा ताओ देवलोगाओ आउक्खएणं ठिइक्खएणं भवक्खएणं अनंतरं चयं चइत्ता इहेव जंबुद्दीवे २ भारहे वासे विसुद्धपितिमातिवंसेसु रायकुलेसु पत्तेयं २ कुमारत्ताए पच्चायासी, तंजहा–पडिबुद्धि इक्खागराया चंदच्छाए अंगाराय संखे कासिराया रुप्पी*

*कुणालाहिवती अदीनसत्तू कुरुराया जितसत्तू पंचालाहिवई,*

*तते णं से महब्बले देवे तीहिं नाणेहिं समग्गे उच्चट्ठाणट्ठिएसु गहेसु सोमासु दिसासु वितिमिरासु विसुद्धासु जइतेसु सउणेसु पयाहिणाणुकूलंसि भूमिसप्पिंसि मारुतंसि पवायंसि निप्फन्नसस्समेइणीयंसि कालंसि पमुइयपक्कीलिएसु जणवएसु अद्धरत्तकालसमयंसि अस्सिणीनक्खत्तेणं जोगमुवागएणं जे से हेमंताणं चउत्थे मासे अट्ठमे पक्खे फग्गुणसुद्धे तस्स णं फग्गुणसुद्धस्स चउत्थिपक्खेणं जयंताओ विमाणाओ बत्तीसं सागरोवमट्ठितीयाओ अनंतरं चयं चइत्ता इहेव जंबुद्दीवे २ भारहे वासे मिहिलाए रायहाणीए कुंभगस्स रन्नो पभावतीए देवीए कुच्छिंसि आहारवक्कंतीए सरीरवक्कंतीए भववक्कंतीए गब्भत्ताए वक्कंते,*

*तं रयणिं च णं चोद्दस महासुमिणा वन्नओ, भत्तारकहणं सुमिणपाढगपुच्छा जाव विहरति तते णं तीसे पभावतीए देवीए तिण्हं मासाणं बहुपडिपुन्नाणं इमेयारूवे डोहले पाउब्भूते—धन्नओ णं ताओ अम्मयाओ जाओ णं जलथलयभासुरप्पभूएणं दसद्धवन्नेणं मल्लेणं अत्थुयपच्चत्थुयंसि सयणिज्जंसि सन्निसन्नाओ सन्निवन्नाओ य विहरंति,*

*एगं च महं सिरिदामगंडं पाडलमल्लियचंपयअसोगपुन्नागनागमरुयगदमणगअणोज्जकोज्जयपउरं परमसुहफासदरिसणिज्जं महया गंधद्धणिं मुयंतं अग्घायमाणीओ डोहलं विणेंति,*

*तते णं तीसे पभावतीए देवीए इमेयारूवं डोहलं पाउब्भूतं पासित्ता अहासन्निहिया वाणमंतरा देवा खिप्पामेव जलथलय० जाव दसद्धवन्नमल्लं कुंभग्गसो य भारग्गसो य कुंभगस्स रन्नो भवणंसि वा० साहरंति, एगं च णं महं सिरिदामगंडं जाव मुयंतं उवणेंति, तए णं सा पभावती देवी जलथलय जाव मल्लेणं डोहलं विणेति, तए णं सा पभावतीदेवी पसत्थडोहला जाव विहरइ,*

*तए णं सा पभावतीदेवी नवण्हं मासाणं अद्धट्ठमाण य रतिंदियाणं जे से हेमंताणं पढमे मासे दोच्चे पक्खे मग्गसिरसुद्धे तस्स णं० एक्कारसीए पुव्वरत्तावरत्त० अस्सिणीनक्खत्तेणं उच्चट्ठाण० जाव पमुइयपक्कीलिएसुजणवएसु आरोयाऽरोयं एक्कूणवीसतिमं तित्थयरं पयाया।*

**वृ.** 'इक्खागराय' त्ति इक्ष्वाकूणां—इक्ष्वाकुवंशजानां अथवा इक्ष्वाकुजनपदस्य राजा, स च कोशलजनपदोऽप्यभिधीयते यत्र अयोध्या नगरीति, 'अंगराय' त्ति अङ्ग—जनपदो यत्र काम्पिल्य (चम्पा) नगरी, एवं काशीजनपदो यत्र वाराणसी नगरी, कुलाणा यत्र श्रावस्ती नगरी, कुरुजनपदो यत्र हस्तिनागपुरं नगरं, पाञ्चाला यत्र काम्पिल्यं नगरं, 'उच्चट्ठाणट्ठिएसु' त्ति उच्चस्थानानि ग्रहाणामादित्यादीनां मेषादीनां दशादिषु त्रिंशांशकेष्वेवमवसेयानि—

॥१॥ "अजवृषमृगाङ्गनाकर्कमीनवणिजोंऽशकेष्विनाद्युच्चाः ।
दश १० शिख्य ३ ष्टविंशति २८ तिथि १६ इन्द्रिय ५ त्रिधन २७ विंशेषु २० ॥"

इति, 'सोमासु' इत्यादि, 'सौम्यासु' दिग्दाहाद्युत्पातवर्जितासु 'वितिमिरासु' तीर्थकरगर्भाधानानुभावेन गतान्धकारासु 'विशुद्धासु' अरजस्वलत्वादिना 'जयिकेषु' राजादीनां विजयकारिषु शकुनेषु यथा 'काकानां श्रावणे द्वित्रिचतुः शब्दाः शुभावहा' इति, प्रदक्षिणः प्रदक्षिणावर्त्तमानत्वात् अनुकूलश्च यः सुरभिशीतमन्दत्वात् स तथा तत्र 'मारुते' वायौ 'प्रवाते' वातुमारब्धे निष्पन्नशस्या मेदिनी—भूर्यत्र काले, अत एव प्रमुदितप्रक्रीडितेषु—हृष्टेषु क्रीडावत्सु च जनपदेषु—विदेहजनपदवास्तव्येषु जनेषु, 'हेमंताणं' ति शीतकालमासानां मध्ये चतुर्थो मासः अष्टमः पक्षः, कोऽसावि-

त्याह–फाल्गुनस्य शुद्धः–शुक्लः–द्वितीय इत्यर्थः, तस्य फाल्गुनशुद्धस्य पक्षस्य या चतुर्थी तिथिस्त-स्याः पक्षः–पार्श्वोऽर्द्धरात्रिरिति भावः,

तत्र 'ण'मित्यालङ्कारे, वाचनान्तरे तु गिम्हाणं पढमे इत्यादि दृश्यते तत्रापि चैत्रसितचतुर्थ्यां मार्गशीर्षसितैकादश्यां तज्जननदिने नव सातिरेका मासाःअभिवर्द्धितमासकल्पनया भवन्तीति तदपि सम्भवति, अतोऽत्र तत्त्वं विशिष्टज्ञानिगम्यमिति, 'अनंतरं चयं चइत्त'त्ति अव्यवहितं च्यवनं कृत्वेत्यर्थः, अथवा अनन्तरं चयं–शरीरं देवसम्बन्धीत्यर्थः 'चईत्ता' त्यक्त्वा 'आहारे'त्यादि आहारापक्रान्त्या–देवाहारपरित्यागेन भवापक्रान्त्या–देवगतित्यागेन शरीरापक्रान्त्या–वैक्रियशरीरत्यागेन अथवा आहारव्युत्क्रान्त्या–अपूर्वाहारोत्पादेन मनुष्योचिताहारग्रहणेनेत्यर्थः, एवमन्यदपि पदद्वयमिति, गर्भतया व्युत्क्रान्तः–उत्पन्नः,

'मल्लेणं'ति मालभ्यो हितं माल्यं–कुसुमं जातावेकवचनं 'अत्थुयपच्चत्थुयंसि'त्ति आस्तृते–आच्छादिते प्रत्यवस्तृते पुनः पुनराच्छादिते इत्यर्थः शयनीये निषण्णा निवन्नाः–सुप्ताः, 'सिरिदामगंड'ति श्रीदाम्नां–शोभावन्मालानां काण्डं–समूहः श्रीदामकाण्डं, अथवा गण्डो–दण्डः तद्वद्यत्तद् गण्ड एवोच्यते, श्रीदाम्नां गण्डः श्रीदामगण्डः, पाटलाद्याः पुष्पजातयः प्रसिद्धाः, नवरं मल्लिका–विचकिलः मरुबकः–पत्रजातिविशेषः 'अणोज्ज'त्ति अनवद्यो–निर्दोषः कुब्जकः–श तपत्रिका-विशेषः एतानि प्रचुराणि यत्र तत्तथा, परमशुभदर्शनीयं परमसुखदर्शनीयं वा 'महया गंधद्धणिं मुयंतं'ति महताप्रकारेण गंधध्राणिं–सुरभिगन्धगुणं तृप्तिहेतुं पुद्‌गलसमूहं मुञ्चत् आजिघ्रन्त्यः–उत्सिङ्घन्त्यः, 'कुंभग्गसो य'त्ति कुम्भपरिमाणतः 'भारग्गसो य'त्ति भारपरिमाणतः, 'आरोग्गारोग्गं'ति अनाबाधा माता अनाबाधं तीर्थकरम् ।

**मू. (८२)** *तेणं कालेणं २ अहोलोगवत्थव्वाओ अट्ठ दिसाकुमारीओ मयहरीयाओ जहा जंबुद्दीवपन्नत्तीए जम्मणं सव्वं नवरं मिहिलाए कुंभयस्स पभावतीए अभिलाओ संजोएव्वो जाव नंदीसरवरे दीवे महीमा, तया णं कुंभए राया बहूहिं भवणवति ४ तित्थयर० जाव कम्मं जाव नामकरणं, जम्हा णं अम्हे इमीए दारियाए माउए मल्लसयणिज्जंसि डोहले विणीते तं होउ णं नामेणं मल्ली, जहा महाबले नाम जाव परिवड्ढिया ।*

**वृ.** 'अहोलोयवत्थव्वाओ'त्ति गजदन्तकानामधः अधोलोकवास्तव्या अष्टौ दिक्कुमारीमह-त्तरिकाः, इह चावसरे यदभिधेयं तन्महतो ग्रन्थस्य विषय इतिकृत्वा सङ्क्षेपार्थमतिदेशमाह–'जहा जंबुद्दीवपन्नत्तीए जम्मणं सव्वं'ति यथा जम्बूद्वीपप्रज्ञप्त्यां सामान्यतो जिनजन्मोक्तं तथा मल्लीतीर्थकृतो जन्मेति–जन्मवक्तव्यता सर्वा वाच्येति, नवरमिह मिथिलायां नगर्यां कुम्भस्य राज्ञः प्रभावत्या देव्याः इत्ययमभिलाषः संयोजितव्यो, जम्बूद्वीपप्रज्ञप्त्यां तु नायं विद्यते इति, किंपर्यवसानं जन्म वक्तव्यमित्याह–यावन्नन्दीश्वरे 'महिम'त्ति अतिदिष्टग्रन्थश्चार्थत एवं द्रष्टव्यो, यथा अष्टौ दिक्कुमारीमहत्तरिकाः भोगङ्कराप्रभृतयस्तत्समयमुपजातसिंहासनप्रकम्पाः प्रयुक्तावधिज्ञानाः समवसितैकोनविंशतितमतीर्थनाथजननाः ससम्भ्रममनुष्ठितसमवायाः समस्तजिननायक-जन्मसु महामहिमविधानमस्माकं जीतमिति विहितनिश्चयाः स्वकीयस्वकीयाभि-योगिकदेवविहित-दिव्यविमानारूढाः सामानिकादिपरिकरवृताः सर्वर्द्धया मल्लिजिनजन्मनगरीमागम्य जिनजन्मभवनं यानविमानैस्त्रिः प्रदक्षिणीकृत्य उत्तरपूर्वस्यां दिशि यानविमानानि चतुर्भिरङ्गुलैर्भुवम- प्राप्तानि

व्यवस्थाप्य जिनसमीपं जिनजननीसमीपं च गत्वा त्रिः प्रदक्षिणीकृत्य कृतप्राञ्जलिपुटा इदमवादिषुः— नमोऽस्तु ते रत्नकुक्षिधारिके ! नमोऽस्तु ते जगत्प्रदीपदायिके ! वयमधोलोकवास्तव्या दिक्कुमार्यो जिनस्य जन्ममहिमानं विधास्यामः अतो युष्माभिर्न भेतव्यमिति अभिधाय च विहितसंवर्त्तवाताः जिनजन्मभवनस्य समन्ताद्योजनपरिमण्डलक्षेत्रस्य तृणकचवराद्यशुचिवस्तुनोऽपनयनेन विहितशुध्धोर्जिनजनन्योरदूरतो जिनस्यासाधारणमगणितगुणगण- मागायन्त्यस्तस्थुः,

एवमेवोर्ध्वलोकवास्तव्या नन्दनवनकूटनिवासिन्य इत्यर्थः अष्टौ दिक्कुमारीमहत्त- रिकास्तथैवागत्य विरचिताभ्रवर्द्दलिकाः आयोजनमानक्षेत्रं गन्धोदकवर्षं पुष्पवर्षं धूपघटीश्च कृत्वा जिनसमीपमागत्य परिगायन्त्य आसांचक्रुः तथा पौरस्त्यरुचकवास्तव्या रुचकाभिधानस्य त्रयोदशस्य द्वीपस्य मध्यवर्त्तिनः प्राकाराकारेण मण्डलव्यवस्थितस्योपरि पूर्वदिग्व्यवस्थितेष्वष्टसु कूटेषु कृतनिवासा इत्यर्थः आगत्य तथैवादर्शहस्ता गायन्त्यस्तस्थुः, एवं दक्षिणरुचकवास्तव्या जिनस्य दक्षिणेन भृङ्गारहस्ताः पश्चिमरुचकवास्तव्या जिनस्य पश्चिमेन तालवृन्तहस्ता उत्तररुचकवास्तव्या- श्चामरहस्ता जिनस्य उत्तरेण,

एवं चतस्रो रुचकस्य विदिग्वास्तव्या आगत्य दीपिकाहस्ता जिनस्य चतसृषु विदिक्षु तथैव तस्थुः, मध्यमरुचकवास्तव्या रुचकद्वीपस्याभ्यन्तरार्द्धवासिन्य इत्यर्थः चतस्रस्तास्तथैवागत्य जिनस्य चतुरङ्गुलवर्जनाभिनालच्छेदनं च विवरखननं च नाभिनालनिधानं च विवरस्य रत्नपूर्णं च तदुपरि हरितालिकापीठबन्धं च पश्चिमावर्जदिक्त्रये कदलीगृहत्रयं च तन्मध्येषु चतुःशालभवनत्रयं च तन्मध्यदेशे सिंहासनत्रयं च दक्षिणे सिंहासने जिनजनन्योरुपवेशनं च शतपाकादितैलाभ्यङ्गनं च गन्धद्रव्योद्वर्त्तनं च पुष्पोदकं च पूर्वत्र पुष्पोदकगन्धोदकशुद्धोदकमज्जनं च सर्वालङ्कारविभूषणं च उत्तरत्र गोशीर्षचन्दनकाष्ठैर्वह्न्युज्ज्वलनं चाग्निहोमं च भूतिकर्म च रक्षापोट्टलिकां च मणिमय- पाषाणद्वयस्य जिनकर्णाभ्यर्णे प्रताडनं च भवतु भगवान् पर्वतायुरिति भणनं च पुनः समातृकजिनस्य स्वभवननयनं च शय्याशायनं च चक्रुः कृत्वा च गायन्त्यस्तस्थुरिति ।

सौधर्मकल्पे च शक्रस्य सहसा आसनं प्रचकम्पे अवधिं चासौ प्रयुयुजे तीर्थकरजन्म चालुलोके ससंभ्रमं च सिंहासनादुत्तस्थौ पादुके च मुमोच उत्तरासङ्गं च चकार सप्ताष्टानि च पदानि जिनाभिमुख- मुपजगाम भक्तिभरनिर्भरो यथाविधि जिनं च ननाम पुनः सिंहासनमुपविवेश हरिणेगमेषीदेवं पदात्यनीकाधिपतिं शब्दयांचकार तं चादिदेश यथा सुधर्मायां सभायां योजनपरिमण्डलां सुघोषाभिधानां घण्टां त्रिस्ताडयन्नुद्घोषणां विधेहि, यथा—भो भो देवा ! गच्छति शक्रो जम्बूद्वीपं तीर्थकरजन्ममहिमानं कर्तुमतो यूयं सर्वसमृध्या शीघ्रं शक्रस्यान्तिके प्रादुर्भवतेति, स तु तथैव चकार, तस्यां च घण्टायां ताडितायामन्यान्येकोनद्वात्रिंशदघण्टालक्षाणि समकमेव रणरणारवं चक्रुः, उपरते च घण्टारवे घोषणामुपश्रुत्य यथादिष्ट देवाःसपदि विदधुः,

ततो पालकाभिधानाभियोगिकदेवविरचिते लक्षयोजनप्रमाणे पश्चिमावर्जदिक्त्रयनिवेशित- तोरणद्वारे नानामणिमयूखमञ्जरीरञ्जितगगनमण्डले नयनमनसामतिप्रमोददायिनि महाविमा- नेऽधिरूढः सामानिकादिदेवकोटीभिरनेकाभिः परिवृतः पुरःप्रवर्त्तितपूर्णकलशभृङ्गार- च्छत्रपताकाचामराद्यनेकमङ्गल्यवस्तुस्तोमः पञ्चवर्णकुडभिकासहपरिमण्डितयोजनसहस्रोच्छ्रित- महेन्द्रध्वजप्रदर्शितमार्गो नन्दीश्वरद्वीपे दक्षिणपूर्वे रतिकरपर्वते कृतावतारो दिव्यविमानर्द्धिमुप-

संहरन् मिथिलां नगरीमाजगाम, विमानारूढ एव भगवतो जिनस्य जन्मभवनं त्रिः प्रदक्षिणीकृतवान्, उत्तरपूर्वस्यां दिशि चतुर्भिरङ्गुलैर्भुवमप्राप्तं विमानमवस्थापितवान्,

ततोऽवतीर्य भगवन्तं सम[illegible]कं दिक्कुमारीवदभिवन्द्य जिनमातरमवस्वाप्य जिनप्रतिबिम्बं तत्सन्निधौ विधाय पञ्चधाऽऽत्मानमाधाय एकेन रूपेण करतलपल्लवावधृतजिनः अन्येन जिननायकोपरिविधृतच्छत्रः अन्याभ्यां करचालितप्रकीर्णकः अन्येन च करकिशलयकलितकुलिशः पुरः प्रगन्ता सुरगिरिशिखरोपरिवर्त्तिपण्डकवनं गत्वा तद्व्यवस्थितातिपाण्डुकम्बलाभिधानशिलासिंहासने पूर्वाभिमुखो निषण्णः, एवमन्ये ईशानादयो वैमानिकेन्द्राः चमरादयो भवनपतीन्द्राः कालादयो व्यन्तरेन्द्राः चन्द्रसूर्यादयो ज्योतिष्काः सपरिवाराः मन्दरेऽवतेरुः, ततश्चाच्युतदेवराजो जिनाभिषेकमत्याऽऽभियोगिकदेवानादिदेश, ते चाष्टसहस्रं सौवर्णिकानां कलशानामेवं रूप्यमयानां मणिमयानां एवं द्विकसंयोगवतां त्रीण्यष्टसहस्राणि त्रिसंयोगवतामष्टसहस्रं भौमेयकानां च तथाऽष्टसहं चन्दनकलशानां भृङ्गाराणामादर्शानां स्थालानामन्येषां च विवधानमभिषेकोपयोगिनां भाजनानामष्टसहस्रं २ विचक्रुः, तैश्च कलशादिभाजनैः क्षीरोदस्य समुद्रस्य पुष्करोदलस्य च मागधादीनां च तीर्थानां गङ्गादीनां च महानदीनां पद्मादीनां महाह्रदानामुदकमुत्पलादीनी मृत्तिकां च हिमवदादीनां च वर्षधराणां वर्त्तुलविजयार्द्धानां च पर्वतानां भद्रशालादीनां च वनानां पुष्पाणि गन्धान् सर्वौषधीः तुवराणि सिद्धार्थकान् गोशीर्षचन्दनं चानिन्युः, ततोऽसावच्युतदेवराजोऽनेकैः सामानिकदेवसहस्रैः सह जिनपतिमाभिषिषेच, अभिषेके च वर्त्तमाने इन्द्रादयो देवाः छत्रचामरकलशधूपकडुच्छुकपुष्प- गन्धाद्यनेकविधाभिषेकद्रव्यव्यग्रहस्ताः वज्रशूलाद्यनेकायुध- सम्बन्धवन्धुरपाणयः आनन्द- जललवस्खलुतगण्डस्थलाः ललटापट्टघटितकरसम्पुटा जयजयारव- मुखरितदिगन्तराः प्रमोदमदिराम- न्दमदवशविरचितविविधचेष्टाः पर्युपासांचक्रिरे, तथा केचित् चतुर्विधं वाद्यं वादयामासुः केचिच्चतुर्विधं गेयं परिजगुः केचिच्चातुर्विधं नृत्तं ननृतुः केचिच्चतुर्विध- मभिनयमभिनिन्युकेचिद् द्वात्रिंशद्विधं नाट्यविधिमुपदर्शयामासुरिति,

ततो गन्धकाषायिकया गात्राण्यलूपयन्, ततश्चाच्युतेन्द्रो मुकुटादिभिर्जिनमलञ्चकार, ततो जिनपतेः पुरतो रजतमयतन्दुलैर्दर्पणादीन्यष्टाष्टमङ्गलकान्यालिलेख पाटलादिबहलप- रिमलकलितकुसुमनिकरं व्यकिरत् शुभसुरभिगन्धवन्धुरं धूपं परिददाह, अष्टोत्तरेण वृत्तशतेन च सन्तुष्टस्तुधाव–नमोऽस्तु ते सिद्ध ! बुद्ध ! नीरजः ! श्रमण ! समाहित समस्तसम ! योगिन् शल्यकर्तन ! निर्भय ! नीरागद्वेष ! निर्मम ! निःशल्य ! निःसङ्ग ! मानमूरणागण्यगुणरत्न ! शीलसागर ! अनन्ताप्रमेयभव्यधर्मवरचतुरन्तचक्रवर्त्तिन् ! नमोऽस्तु तेऽर्हते नमोऽस्तु ते भगवते इत्यभिधाय वन्दते स्म, ततो नातिदूरे स्थितः पर्युपासांचक्रे, एवं सर्वेऽप्यभिषिषेचुः, केवलं सर्वान्ते शक्रोऽभिषिक्तवान्, तदभिषेकावसरे च ईशानः शक्रव दात्मानं पञ्चधा विधाय जिनस्योत्सङ्गधर- णादिक्रियामकरोत्,

ततः शक्रो जिनस्य चतुर्दिशि चतुरो धवलवृषभान् विचकार, तेषां च शृङ्गाग्रेभ्योऽष्टौ तोय धारा युगपद्विनिर्ययुः वेगेन च वियति समुत्पेतुः एकत्र च मिलन्तिस्म भकवतो मूर्द्धनि च निपेतुः, शेषमच्युतेन्द्रवदसावपि चकार, ततोऽसौ पुनर्विहितपञ्चप्रकारात्मा तथैव गॉहीतजिनश्चतुर्नि- कायदेवपरिवृतः तूर्यनिनादापूरिताम्बरतलो जिननायकं जिनजनन्याः समीपे स्थापयामास,

जिनप्रति- बिम्बमवस्वापं च प्रतिसञ्जहार, क्षौमयुगलं कुण्डलयुगलं च तीर्थंकरस्योच्छीर्षकमूले स्थापयति स्म श्रीदामगण्डकं च नानामणिमयं जिनस्योल्लोके दृष्टिनिपातनिमित्तमतिरमणीयं निचिक्षेप,

ततः शक्रो वैश्रमणमवादीत्–भो देवानुप्रिय ! द्वात्रिंशद्धिरण्यकोटीर्द्वात्रिंशत्सुवर्णकोटीश्च जिनजन्मभवने यथा संहरेति, तदादेशाच्च जृम्भका देवास्तथैव चक्रुः शक्रः पुनर्देवैर्जिनजन्मनगर्यां त्रिकादिष्वेवं घोषणं कारयामास, यथा–हन्त ! भुवनवास्यादिदेवाः ! शृण्वन्तु भवन्तो यथा यो जिने जिनजनन्यां वाऽशुभं मनः सम्प्रधारयति तस्यार्जकमञ्जरीव सप्तधा मूर्द्धा स्फुटतु, ततो देवा नन्दीश्वरे महिमानं विदधुः, स्वस्थानानि च जग्मुरिति । मालायै हितं तत्र वा साध्विति माल्यं–कुसुमं तद्‌गतदोहदपूर्वकंजन्मत्वेनान्वर्थतः शब्दतस्तु निपातनात् मल्लीति नाम कृतं, यत्तु स्त्रीत्वेऽपि तस्यार्हञ्जिनस्तीर्थकर इत्यादिशब्दैर्व्यपदेशः सोऽर्हदा- दिशब्दानां बाहुल्येन पुंस्त्वेव प्रवृत्तिदर्शनादिति, 'यथा महाबल' इति भगवत्यां महाबलोऽभिहित इहैव वा यथा मेघकुमार इति ।

मू. (८३) *सा वड्ढती भगवती दियलोयचुता अणोवमसिरीया ।*
*दासीदासपरिवुडा परिकिन्ना पीढमद्देहिं ॥*

वृ. 'सा वड्ढए भगवती' त्यादि गाथाद्वयं आवश्यकनिर्युक्तिसम्बन्धि ऋषभमहावीरवर्णक- रूपं बहुविशेषसाधर्म्यादिहाधीतं न पुनर्गाथाद्वयोक्तानि विशेषणानि सर्वाणि मल्लिजिनस्य घटन्त एव, तच्च दर्शयिष्यामः, ततः सा वर्द्धते–वृद्धिमुपगच्छति स्म भगवती ऐश्वर्यादिगुणयोगात् देवलो- काच्युता अनुत्तरविमानावतीर्णत्वात् अनुपमश्रीका–निरुपमानशोभा दासीदासपरिवृतेति प्रतीतं,

परिकीर्णा–परिकरिता पीठमर्दैः–वयस्यैरिति, एतत्किल प्रायः स्त्रीणामसम्भवि, वयस्यिकानामेव तासां सम्भवात्, अथवा अलौकिकचरितत्वेन पीठमर्दसम्भवेऽपि निर्दूषणत्वेन भगवत्या नेदं विशेषणं न सम्भवविति ।

मू. (८४) *असियसिरया सुनयणा बिंबोट्ठी धवलदंतपंतीया ।*
*वरकमलकोमलंगी फुल्लुप्पगंधनीसासा ॥"*

वृ. असितशिरोजा–कालकुन्तला सुनयना–सुलोचना बिम्बोष्ठी–पक्वगोल्हाभिधान- फलविशेषाकारोष्ठी धवलदन्तपङ्क्तिका पाठान्तरेण धवलदन्तश्रेणिका वरकमलगर्भगौरीत्येतद्विशे षणं न सम्भवति तस्याः कमलगर्भस्य सुवर्णवर्णत्वात् भगवत्याश्च मल्ल्याः प्रियङ्गुवर्णत्वेन श्यामत्वाद्, उक्तं च–

॥ १ ॥ "पउमाभ वासुपुज्जा रत्ता ससिपुप्फदंत ससिगोरा ।
सुव्वयनेमी काला पासो मल्ली पियंगाभा ॥" इति,

अथवा वरकमलस्य–प्रधानहरिणस्य गर्भ इव गर्भो जठरसम्भूतत्वसाधर्म्यात् वरकमलगर्भः–कस्तूरिका तद्वद् गौरी–अवदाता वरकमलगर्भगौरी श्यामवर्णत्वात्, कस्तूरिकाया इव श्यामेत्यर्थः, पाठान्तरेण वरकमलगर्भवर्णा, तत्रापि श्यामवर्णेत्यर्थः, वाचनान्तरेण वरकम- लकोमलाङ्गीत्यनवद्यमेव, फुल्लं–विकसितं यदुत्पलं–नीलोत्पलादि तस्य यो गन्धस्तद्वन्निःश्वासो गन्धसाधर्म्याद्यस्याः सा तथा सुरभिनिःश्वासेत्यर्थः,

पाठान्तरेण 'पउमुप्पलुप्पलगंधनीसास' त्ति तत्र पद्मं–शतपत्रादि गन्धद्रव्यविशेषो वा

उत्पलं–नीलोत्पलमित्यादि उत्पलकुष्ठं च–गन्धद्रव्यविशेष इति,

*मू. (८५) तए णं सा मल्ली विदेहवररायकन्ना उम्मुक्कबालभावा जाव रूवेण जोव्वनेण य लावन्नेण य अतीव २ उक्किट्ठा उक्किट्ठसरीरा जाया यावि होत्था,*

*तते णं सा मल्ली देसूणवाससयजाया ते छप्पि रायाणो विपुलेण ओहिणा आभोएमाणी २ विहरति, तं०–पडिबुद्धिं जाव जियसत्तुं पंचालाहिवइं, तते णं सा मल्ली कोडुंबि० तुब्भे णं देवा० असोगवणियाए एगं महं मोहणघरं करेह अनेगखंभसयसन्निविट्ठं,*

*–तस्स णं मोहणघरस्स बहुमज्झदेसभाए छ गब्भघरए करेह, तेसिं णं गब्भघरगाणं बहुमज्झ-देसभाए जालघरयं करेह, तस्स णं जालघरयस्स बहुमज्झदेसभाए मणिपेढियं करेह २ जाव पच्चप्पिणंति, तते णं मल्ली मणिपेढियाए उवरिं अप्पणो सरिसियं सरित्तयं सरिव्वयं सरिसलावन्नजोव्व- णगुणोववेयं कणगमइं मत्थयच्छिड्डं पउमुप्पलप्पिहाणं पडिमं करेति २ जं विपुलं असनं ४ आहारेति ततो मणुन्नाओ असन४ कल्लाकल्लिं एगमेगं पिंडं गहाय तीसे कणगामतीए मत्थयछिड्डाए जाव पडिमाए मत्थयंसि पक्खिवमाणी २ विहरति,*

*तते णं तीसे कणगमतीए जाव मच्छयछिड्डाए पडिमाए एगमेगंसि पिंडे पक्खिप्पमाणे २ ततो गंधे पाउब्भवति, से जहा नामए अहिमडेत्ति वा जाव एत्तो अनिट्ठतराए अमनामतराए।*

**वृ.** 'विदेहरायवरकन्न'त्ति विदेहा–मिथिलानगरीजनपदस्तस्या राजा कुम्भकस्तस्य वरकन्या या सा तथा, 'उक्किट्ठा उक्किट्ठसरीर'त्ति रूपादिभिरुत्कृष्टा, किमुक्तं भवति ?–उत्कृष्टशरीरेति, 'देसूणवाससयजाय'त्ति देशोनं वर्षशतं जाताया यस्याः सा तथा, 'मोहणघरयं'ति सम्मोहोत्पादकं गृहं रतिगृहं वा 'गब्भघरए'त्ति मोहनगृहस्य गर्भभूतानि वासभवनानीति केचित् 'जालघरगं'ति दार्वादिमयजालकप्रायकुड्यं यत्र मध्यव्यवस्थितं वस्तु बहिः स्थितैर्दृश्यते,

'से जहा नामए अहिमडे इव'त्ति स गन्धो यथेति दृष्टान्तोपन्यासे यादृश इत्यर्थः नामए इत्यलङ्कारे अहिमृते–मृतसर्पे सर्पकलेवरस्य गन्ध इत्यर्थः, अथवा अहिमृतं–सर्पकलेवरं तस्य यो गन्धः सोऽप्युपचारात् तदेव, इतिरुपदर्शने वा विकल्पे अथवा 'से जह'त्ति उदाहरणोपन्या-सोपक्षेपार्थः, 'अहिमडे इव'त्ति अहिमृतकस्येव अहिमृतकमिव वेति, यावत्करणादिदं दृश्यं–'गोमडेइ वा सुणगमडेइ वा दीवगमडेइ वा मज्जारमडेइ वा मणुस्समडेइ वा महिसमडेइ वा मूसगमडेइ वा आसमडेइ वा हत्थिमडेइ वा सीहमडेइ वा वग्घमडेति वा विगमडेइ वा दीवियमडेइ वा,' द्वीपिकः–चित्रकः किंभूते अहिकडेवरादौ किंभूतं वा तदित्याह–'मयकुहियविणट्ठदुरभिवा-वण्णदुब्भिगंधे' मृतं जीवविमुक्तमात्रं सत् यत् कुथितं–कोथमुपगतं तत् मृतकुथितमीषद्-दुर्गन्धमित्यर्थः, तथा विनष्टं–उच्छूनत्वादिभिर्विकारैः स्वरूपादपेतं सत् यद्दुरभि–तीव्रतरदुष्टगन्धोपेतं तत्तथा व्यापन्नं–शकुनिश्व गालादिभिर्भक्षणाद्विरूपां बिभत्सामवस्थां प्राप्तं सद्यद् दुरभिग-न्धंतीव्रतमाशुभगन्धं तत्तथा,ततः पदत्रयस्य कर्मधारयः,

तत्र तदेव वा 'किमिजालाउलसंसत्ते' कृमिजालैराकुलैः– व्याकुलैः आकुलं वा–सङ्कीर्णं यथा भवतीत्येवं संसक्तं–सम्बद्धं यत्र तत्तथा, तत्र तदेव वा 'असुइविलीणविगयबिभच्छदरिसणिज्जे' अशुचि–अपवित्रमस्पृश्यत्वात् विलीनं–जुगुप्सासमुत्पादकत्वात् विकृतं–विकारवत्त्वात् बीभत्सं द्रष्टुमयोग्यत्वात् एवंभूतं दृश्यते इति दर्शनीयं, ततः कर्मधारयः, तत्र तदेव वा 'भवेतारूवे सिया'

यादृशः सर्पादिकलेवरे गन्धो भवेत् यादृशं वा सर्पादिकलेवरं गन्धेन भवेत् एतद्रूपस्तद्रूपो वा स्यात्–भवेत्तस्य भक्तकवलस्य गन्ध इति सूत्रकारस्य विकल्पोल्लेखः ?, 'नो इणट्ठे समट्ठे' नायमर्थः समर्थः–सङ्गत इत्ययं तु तस्यैव निर्णयः, निर्णीतमेव गन्धस्वरूपमाह–'एत्तो अनिट्ठतराए चेव' इतः–अहिकडेवरादिगन्धात् सकाशादनिष्टतर एव–अभिलापस्याविषय एव अकान्तरकः–अकमनीयतरस्वरूपः अप्रियतरः–अप्रीत्युत्पादकत्वेन अमनोज्ञतरकः–कथयाऽप्यनिष्टत्वात् अमनोज्ञतरश्चिन्तयाऽपि मनसोऽनभिगम्य इत्यर्थः ।

*मू. (८६) तेणं कालेणं २ कोसला नाम जणवए, तत्थ णं सागेए नाम नयरे तस्स णं उत्तरपुरच्छिमे दिसीभाए, एत्थ णं महं एगे नागधरए होत्था दिव्वे सच्चे सच्चोवाए संनिहियपाडिहेरे, तत्थ णं नगरे पडिबुद्धिनाम इक्खागुराया परिवसति पउमावती देवी सुबुद्धी अमच्चे सामदंड० तते णं पउमावतीए अन्नया कयाइं नागजन्नए यावि होत्था, तते णं सा पउमावती नागजन्नमुवट्ठियं जाणित्ता जेणेव पडिबुद्धि० करयल० एवं वदासी–एवं खलु सामी ! मम कल्लं नागजन्नए यावि भविस्सति तं इच्छामि णं सामी ! तुब्भेहिं अब्भणुन्नाया समाणी नागजन्नयं गमित्तए,*

*तुब्भेऽवि णं सामी ! मम नागजन्नयंसि समोसरह, तते णं पडिबुद्धी पउमावतीए देवीए एयमट्ठं पडिसुणेति, तते णं पउमावती पडिबुद्धिणा रन्ना अब्भणुन्नाया हट्ठ० कोडुंबिय० सद्दावेति २ एवं वदासी–एवं खलु देवाणुप्पिया ! मम कल्लं नागजन्नए भविस्सति तं तुब्भे मालागारे सद्दावेह २ एवं वदह–एवं खलु पउमावईए देवीए कल्लं नागजन्नए भविस्सइ तं तुब्भे णं देवाणुप्पिया ! जलथलय० दसद्धवन्नं मल्लं नागधरयंसि साहरह एगं च णं महं सिरिदामगंडं उवणेह,*

*तते णं जलथलय० दसद्धवन्नेणं मल्लेणं नाणाविहभत्तिसुविरइयं हंसमियमउरकोंचसारस-चक्कवायमयणसालकोइलकुलोववेयं ईहामियजावभत्तिचित्तं महग्घं महरिहं विपुलं पुप्फमंडवं विरएह, तस्स णं बहुमज्झदेसभाए एगं महं सिरिदामगंडं जाव गंधद्धुणिं मुयंतं उल्लोयंसि ओलंबेह २ पउमावतिं देविं पडिवालेमाणा २ चिट्ठह, तते णं ते कोडुंबिया जाव चिट्ठंति, तते णं सा पउमावती देवी कल्लं० कोडुंबिए एवं वदासी–खिप्पामेव भो देवाणुप्पिया ! सागेयं नगरं सब्भिंतरबाहिरियं आसितसम्मज्जितोवलित्तं जाव पच्चप्पिणंति, तते णं सा पउमावती दोच्चंपि कोडुंबिय० खिप्पामेव लहुकरणजुत्तं जाव जुत्तामेव उवट्ठवेह, तते णं तेऽवि तहेव उवट्ठावेंति,*

*तते णं सा पउमावती अंतो अंतेउरंसि ण्हाया जाव धम्मियं जाणं दूरूढा, तए णं सा पउमावई नियगपरिवालसंपरिवुडा सागेयं नगरं मज्झंमज्झेणं निज्जति २ जेणेव पुक्खरणी तेणेव उवागच्छति २ पुक्खरणिं ओगाहइ २ जलमज्जणं जाव परमसूइभूया उल्लपडसाडया जातिं तत्थ उप्पलातिं जाव गेण्हति २ जेणेव नागघरए तेणेव पहारेत्थ गमणाए,*

*तते णं पउमावतीए दासचेडीओ बहूओ पुप्फपडलगहत्थगयाओ धूवकडुच्छुगहत्थगयाओ पिट्ठतो समनुगच्छंति, तते णं पउमावती सव्विड्ढिए जेणेव नागघरे तेणेव उवागच्छति २ नागघरयं अनुपविसति २ लोमहत्थगं जाव धूवं डगति २ पडिबुद्धिं पडिवालेमाणी २ चिट्ठति,*

*तते णं पडिबुद्धी ण्हाए हत्थिखंधवरगते सकोरंट जाव सेयवरचामराहिं हयगयरहजोहम-हयाभडगचडकरपहकरेहिं साकेयनगरं० निग्गच्छति २ जेणेव नागघरे तेणेव उवागच्छति २ हत्थिखंधाओ पच्चोरुहति २ आलोए पणामं करेइ २ पुप्फमंडवं अणुपविसति २ पासति तं एगं*

मई सिरिदामगंडं, तए णं पडिबुद्धी तं सिरिदामगंडं सुइरं कालं निरिक्खइ २ तंसि सिरिदामगंडंसि जायविम्हए सुबुद्धिं अमच्चं एवं वयासी–तुमन्नं देवाणुप्पिया ! मम दोच्चेणं बहूणि गामागर जाव सन्निवेसाइं आहिंडसि बहूणि रायईसर जाव गिहातिं अणुपविससि तं अत्थि णं तुमे कहिंचि एरिसए सिरिदामगंडेदिट्ठपुव्वे जारिसए णं इमे पउमावतीए देवीए सिरिदामगंडे ?,

तते णं सुबुद्धी पडिबुद्धिं रायं एवं वदासी–एवं खलु सामी ! अहं अन्नया कयाइं तुब्भं दोच्चेणं मिहिलं रायहाणि गते तत्थ णं मए कुंभगस्स रन्नो धूयाए पभावईए देवीए अत्तयाए मल्लीए संवच्छरपडिलेहणगंसि दिव्वे सिरिदामगंडे दिट्ठपुव्वे तस्स णं सिरिदामगंडस्स इमे पउमावतीए सिरिदामगंडे सयसहस्सतिमं कलं न अग्धति,

तते णं पडिबुद्धी सबुद्धिं अमच्चं एवं वदासी–केरिसिया णं देवाणुप्पिया ! मल्ली विदेहरायवरकन्ना जस्स णं संवच्छरपडिलेहणयंसि सिरिदामगंडस्स पउमावतीए देवीए सिरिदामगंडे सयसहस्सतिमंपि कलं न अग्धति ?,

तते णं सुबुद्धी पडिबुद्धिं इक्खागुरायं एवं वदासी–विदेहरायवरकन्नगा सुपइट्ठियकुम्मुन्नयचारुचरणा वन्नओ, तते णं पडिबुद्धि सुबुद्धिस्स अमच्चस्स अंतिए सोच्चा निसम्म सिरिदामगंडजणितहासे दूयं सद्दावेइ २ एवं व०–गच्छाहि णं तुमं देवाणुप्पिया ! मिहिलं रायहाणिं तत्थ णं कुंभगस्स रन्नो धूयं पभावतीए देवीए अत्तियं मल्लिं विदेहवररायकण्णगं मम भारियत्ताए वरेहि जतिविय णं सा सयं रज्जसुंका, तते णं से दूए पडिबुद्धिणा रन्ना एवं वुत्ते समाणे हट्ठ० पडिसुणेति २ जेणेव सए गिहे जेणेव चाउग्घंटे आसरहे तेणेव उवागच्छति २ चाउग्घंटं आसरहं पडिकप्पावेति २ दुरूढे जाव हयगयमहयाभडचडगरेणं साएयाओ निग्गच्छति २ जेणेव विदेहजणवए जेणेव मिहिला रायहाणी तेणेव पहारेत्थ गमणाए

**वृ.** 'नागघरए'त्ति उरगप्रतिमायुक्तं चैत्यं 'दिव्वे'त्ति प्रधानं 'सच्चे'त्ति तदादेशानामवितथत्त्वात्, 'सच्चोवाए'त्ति सत्यावपातं सफलसेवमित्यर्थः 'संनिहियपाडिहेरे'त्ति सन्निहितं–विनिवेशितं प्रातिहार्यं–प्रतीहारकर्म तथाविधव्यन्तरदेवेन यत्र तत्तथा देवाधिष्ठिततमित्यर्थः, 'नागजण्णए'त्ति नागपूजा नागोत्सव इत्यर्थः, 'सिरिदामगंड;'मित्यादौ यावत्करणात् 'पाडलमल्लि' इत्यादिर्वर्णको दृश्यः, 'दोच्चेणं'ति दौत्येन दूतकर्मणा, 'अत्थियाइं'ति इह आइंशब्दो भाषायां 'सवंच्छर- पडिलेहणगंसि'त्ति जन्मिनादारभ्य संवत्सरः प्रत्युपेक्ष्यते–एतावतिथः संवत्सरोऽद्य पूर्ण इत्येवं निरूप्यते महोत्सवपूर्वकं यत्र दिने तत्संवत्सरप्रत्युपेक्षणकं, यत्र वर्षे वर्षं प्रति सङ्ख्याज्ञानार्थं ग्रन्थिबन्धः क्रियते यदिदानीं वर्षग्रन्थिरिति रूढं, तस्येत्यादेरयमर्थः–

मल्लीश्रीदामकाण्डस्य पद्मावतीश्रीदामकाण्डं शतसहस्रतमामपि कलां–शोभाया अंशं नार्धति–न प्राप्नोति, कूर्मोन्नतचारुचरणा इत्यादिस्त्रीवर्णको जम्बूद्वीपप्रज्ञप्त्यादिप्रसिद्धो मल्लीविषये अध्येतव्यः, 'सिरिदामगंडजणियहासे'त्ति श्रीदामकाण्डेन जनितो हर्षः–प्रमोदोऽनुरागो यस्य स तथा, 'अत्तिय'न्ति आत्मजां 'सयं रज्जसुंक'त्ति स्वयं–आत्मना स्वरूपेण निरूपमचरितेतेयियावत् राज्यं शुल्कं–मूल्यं यस्याः सा तथा, राज्यप्राप्त्येत्यर्थः, तथापि वृण्विति सम्बन्धः, घाउग्घंटे'त्ति चतस्रो घण्टाः पृष्ठतोऽग्रतः पार्श्वतश्च यस्य स तथा अश्वयुक्तो रथोऽश्वरथः 'पडिकप्पावेइ'त्ति सज्जयति 'पहारेत्थ गमणाए'त्ति प्रधारितवान्–विकल्पितवान् गमनाय–गमनार्थम् ॥

मू. (८७) तेणं कालेणं २ अंगानाम जणवए होत्था, तत्थ णं चंपानामे नयरी होत्था, तत्थ णं चंपाए नयरीए चंदच्छाए अंगराया होत्था, तत्थ णं चंपाए नयरीए अरहन्नगपामोक्खा बहवे संजत्ता नावावाणियगा परिवसंति अड्ढा जाव अपरिभूया,

तते णं से अरहन्नगे समणोवासए यावि होत्था अहिगयजीवाजीवे वन्नओ, तते णं तेसिं अरहन्नगपामोक्खाणं संजुत्तानावावाणियगाणं अन्नया कयाइ एगयओ सहिआणं इमे एयारूवे मिहो कहासंलावे समुप्पज्जित्था-सेयं खलु अम्हं गणिमं धरिमं च मेज्जं च पारिच्छेज्जं च भंडगं गहाय लवणसमुद्दपोतवहणेण ओगाहित्तएत्तिकट्टु अन्नमन्नं एयमट्ठं पडिसुणेंति २ गणिमं च ४ गेण्हंति २ सगडिसागडियं च सज्जेंति २ गणिमस्स ४ भंडगस्स सगडसागडियं भरेंति २ सोहणंसि तिहिकरणनक्खत्तमुहुत्तंसि विपुलं असन४ उवक्खडावेंति मित्तनाइभोअणवेलाए भुंजावेंति जाव आपुच्छंति २ सगडिसागडियं जोयंति २

चंपाए नयरीए मज्झंमज्झेणं जेणेव गंभीरए पोयपट्टणे तेणेव उवा० २ सगडिसागडियं मोयंति २ पोयवहणं सज्जेंति २ गणिमस्स य जाव चउव्विहस्स भंडगस्स भरेंति तंदुलाण य समितस्स य तेल्लयस्स य गुलस्स य घयस्स य गोरसस्स य उदयस्स य उदयभायणाण य ओसहाण य भेसज्जाण य तणस्स य कट्ठस्स य आवरणाण य पहरणाण य अन्नेसिं च बहूणं पोयवहणपाउग्गाणं दव्वाणं पोतवहणं भरेंति, सोहणंसि तिहिकरणनक्खत्तमुहुत्तंसि विपुलं असन ४ उवक्खडावेंति २ मित्तनातिं आपुच्छंति २ जेणेव पोतट्ठाणे तेणेव उवागच्छंति।

तते णं तेसिं अरहन्नग जाव वाणियगाणं परियणो जाव तारिसेहिं वग्गूहिं अभिनंदंता य अभिसंथुणमाणा य एवं वदासी-अज्ज ताय भाय माउल भाइणज्जे भगवता समुद्देणं अनभिखिज्जमाणा २ चिरं जीवह भद्दं च भे पुनरवि लद्धट्ठे कयकज्जे अणहसमग्गे नियगं घरं हव्वमागए पासामो तिकट्टु ताहिं सप्पिवासाहिं पप्पुयाहिं दिट्ठीहिं निरीक्खमाणा मुहुत्तमेत्तं संचिट्ठंति

तओ सामाणिएसु पुप्फबलिकम्मेसु दिन्नेसु सरसरत्तचंदणदद्दर पंचंगुलितलेसु अनुक्खित्तंसि धूवंसि पूतिएसु समुद्दवाएसु संसारियासु वलयबाहासु ऊसिएसु सिएसु झयग्गेसु पडुप्पवाइएसु तूरेसु जइएसु सव्वसउणेसु गहिएसु रायवरसासणेसु महया उक्किट्ठिसीहणाय जाव रवेणं पक्खुभितमहासमुद्दरवभूयंपिव मेइणिं करेमाणा एगदिसिं जाव वाणियगा नावं दुरूढा,

ततो पुस्समाणवो वक्कमुदाहु-हं भो ! सव्वेसिमवि अत्थसिद्धी उवट्ठिताइं कल्लाणाइं पडिहयातिं सव्वपावाइं जुत्तो पूसो विजओ मुहुत्तो अयं देसकालो, ततो पुस्समाणएणं वक्के मुदाहिए हट्ठतुट्ठे कुच्छिधारकन्नधारगब्भिजसंजत्ताणावावाणियगा वावारिंसु तं नावं पुन्नुच्छंगं पुण्णमुहिं बंधणेहिंतो मुंचंति, तते णं सा नावा विमुक्कबंधणा पवणबलसमाहया उसियसिया विततपक्खा इव गरुडजुवई गंगासलिलतिक्खसोयवेगेहिं संखुब्भमाणी २ उम्मीतरंगमालासहस्साइं समतिच्छमाणी २ कइवएहिं अहोरत्तेहिं लवणसमुद्दं अणेगातिं जोयणसतातिं ओगाढा,

तते णं तेसिं अरहन्नगपामोक्खाणं संजुत्तानावावाणियगाणं लवणसमुद्दं अनेगाइं जोयणसयाइं ओगाढाणं समाणाणं बहूतिं उप्पातियसतातिं पाउब्भूयाइं, तंजहा-अकाले गज्जिते अकाले विज्जुते अकाले थणियसद्दे, अभिक्खणं २ आगासे देवताओ नच्चंति,

एगं च णं महं पिसायरूवं पासंति, तालजंघं दिवं गयाहिं बाहाहिं मसिमूसगमहिसकालगं

भरियमेवन्नं लंबोट्ठं निग्गयग्गदंतं निल्लालियजमलजुयलजीहं आऊसियवयणगंडदेसं चीणचिपिटनासियं विगयभुग्गभग्गभुमयं खज्जोयगदित्तचक्खुरागं उत्तासणगं विसालवच्छं विसालकुच्छिं पलंबकुच्छिं पहसियपयलियपयडियगत्तं पणच्चमाणं अप्फोडंतं अभिवयंतं अभिगज्जंतं बहुसो २ अट्टट्टहासे विणिम्मुयंतं नीलुप्पलगवलगुलियअयसिकुसुमप्पगासं खुरधारं असिं गहाय अभिमुहमावयमाणं पासंति।

तते णं ते अरहण्णगवज्जा संजुत्तानावावाणियगा एगं च णं महं तालपिसायं पासंति तालजंघं दिवं गयाहिं बाहाहिं फुट्टसिरं भमरनिगरवरमासरासिमहिसकालगं भरियमेहवन्नं सुप्पणहं फालसरिसजीहं लंबोट्ठं धवलवट्टअसिलिट्ठतिक्खथिरपीणकुडिलदाढोवगूढवयणं विकोसिय-धारासिजुयलसमसरिसतणुयचंचलगलंतरसलोलचवलफुरुफुरेंतनिल्लालियग्गजीहं अवयच्छिय-महल्लविगयबीभत्सलालपगलंतरत्तातालुयं हिंगुलुयसगब्भकंदरबिलंव अंजणगिरिस्स

—अग्गिजालुग्गिलंतवयणं आउसियअक्खचम्मउइट्टगंडदेसं चीणचिपिडवंकभग्गनासं रोसागयधम्मधमेंतमारुतनिट्ठुरखरफरुसझुसिरं ओभुग्गनासियपुडं धाडुब्भडरइयभीसणमुहं उद्धमुहकन्नसक्कुलियमहंतविगयलोमसंखालगलंतचलियकन्नं पिंगलदिप्पंतलोयणं भिउडित-डियनिडालं नरसिरमालपरिणद्धचिद्धं विचित्तगोणससुबद्धपरिकरं अवहोलंतपुप्फुयायंत-सप्पविच्छुयगोधुंदरनउलसरडविरइयविचित्तवेयच्छमालियागं

—भोगकूरकण्हसप्पधमधमेंतलंबंतकन्नपूरं मज्जारसियाललइयखंधं दित्तधुधुयंतधूयकय-कुंतलसिरं घंटारवेणभीमं भयंकरं कायरजणहिययफोडणं दित्तमट्टट्टहासं विणिम्मुयंतं वसारुहिरपूय-मंसमलमलिणपोच्चडतणुं उत्तासणयं विसालवच्छं पेच्छंता भिन्नणहमुह नयणकन्नवरवग्घचित्त-कत्तीणिवसणं सरसरुहिरगयचम्मविततऊसवियबाहुजुयलं ताहि य खरफरुस असिणिद्धअणि-ट्ठदित्तअसुभअप्पिय अमणुन्न अकंतवग्गूहि य तज्जयंतं पासंति तं तालिपिसायरूवं एज्जमाणं पासंति २ भीया संजायभया अन्नमन्नस्स कायं समतुरंगेमाणा २ बहूणं इंदाण य खंदाण य रुद्दसिववेसमणणा-गाणं भूयाण य जक्खाण य अज्जकोट्टकिरियाण य बहूणि उवाइयसयाणि ओवातियमाणा २ चिट्ठंति, तए णं से अरहन्नए समणोवासए तं दिव्वं पिसायरूवं एज्जमाणं पासति २ अभीते अतत्थे अचलिए असंभंते अनाउले अनुव्विग्गे अभिन्नमुह- रागणयणवन्ने अदीनविमनमाणसे पोयवहणस्स एगदेसंसि वत्थंतेणं भूमिं पमज्जति २ ठाणं ठाइ २ करयलओ एवं वयासी—

नमोऽत्थु णं अरहंताणं जाव संपत्ताणं, जइ णं अहं एत्तो उवसग्गातो मुंचामि तो मे कप्पति पारित्तए अह णं एत्तो उवसग्गाओ ण मुंचामि तो मे तहा पच्चक्खाएयव्वेतिकट्टु सागारं भत्तं पच्चक्खाति, तते णं से पिसायरूवे जेणेव अरहन्नए समणोवासए तेणेव उवा० २ अरहन्नगं एवं वदासी— हं भो! अरहन्नगा अपत्थियपत्थिया जाव परिवज्जिया नो खलु कप्पति तव सीलव्व-यगुणवेरमणपच्चक्खाणे पोसहोववासातिं चालित्तए वा एवं खोभेत्तए वा खंडित्तए वा भंजित्तए वा उज्झित्तए वा परिच्चइत्तए वा, तं जति णं तुमं सीलव्वयं जाव न परिच्चयसि तो ते अहं एयं पोतवहणं दोहिं अंगुलियाहिं गेण्हामि २ सत्तट्ठतलप्पमाणमेत्तातिं उड्ढं वेहासं उव्विहामि २ अंतो जलंसि निच्छोलेमि जेणं तुमं अट्टदुहट्टवसट्टे असमाहिपत्ते अकाले चेव जीवियाओ ववरोविज्जसि,

तते णं से अरहन्नते समणोवासए तं देवं मणसा चेव एवं वदासी— अहं णं देवाणु० !

अरहन्नए नामं समणोवासए अहिगयजीवाजीवे नो खलु अहं सक्का केणइ देवेण वा जाव निग्गंथाओ पावयणाओ चालित्तए वा खोभेत्तए वा विपरिणामेत्तए वा तुमं णं जा सद्धा तं करेहित्तिकट्टु अभीए जाव अभिन्नमुहरागणयणवन्ने अदीनविमनमाणसे निच्चले निप्फंदे तुसिणीए धम्मज्झाणोवगते विहरति,

तए णं से दिव्वे पिसायरूवे अरहन्नगं समणोवासगं दोच्चंपि तच्चंपि एवं वदासी– हं भो अरहन्नगा !० अदीनविमनमाणसे निच्चले निप्फंदे तुसिणीए धम्मज्झाणोवगए विहरति, तते णं से दिव्वे पिसायरूवे अरहन्नगं धम्मज्झाणोवगयं पासति २ पासित्ता बलियतरागं आसुरुत्ते तं पोयवहणं दोहिं अंगुलियाहिं गिण्हति २ सत्तट्ठतलाइं जाव अरहन्नगं एवं वदासी–

हं भो अरहन्नगा ! अप्पत्थियपत्थिया नो खलु कप्पति तव सीलव्वय तहेव जाव धम्मज्झाणोवगए विहरति, तते णं से पिसायरूवे अरहन्नगं जाहे नो संचाएइ निग्गंथाओ० चालित्तए वा० ताहे उवसंते जाव निव्विन्ने तं पोयवहणं सणियं २ उवरिं जलस्स ठवेति २ तं दिव्वं पिसायरूवं पडिसाहरइ २ दिव्वं देवरूवं विउव्वइ २ अंतलिक्खपडिवन्ने सखिंखिणियाइं जाव परिहिते अरहन्नगं स० एवं वयासी– हं भो ! अरहन्नगा ! धन्नोऽसि णं तुमं देवाणुप्पिया ! जाव जीवियफले जस्स णं तव निग्गंथे पावयणे इमेयारूवा पडिवत्ती लद्धा पत्ता अभिसमन्नागया, एवं खलु देवाणुप्पिया ! सक्के देविंदे देवराया सोहम्मेकप्पे सोहम्मवडिंसए विमाणे सभाए सुहम्माए बहूणं देवाणं मज्झगते महया सद्देणं आतिक्खति ४

–एवं खलु जंबूद्दीवे २ भारहे वासे चंपाए नयरीए अरहन्नए सम० अहिगयजीवाजीवे नो खलु सक्का केणति देवेण वा दानवेण वा निग्गंथाओ पावयणाओ चालित्तए वा जाव विपरिणामेत्तए वा, तते णं अहं देवाणु० ! सक्कस्स नो एयमट्ठं सद्दहामि० तते णं मम इमेयारूवे अब्भत्थिए ५

गच्छामि णं अरहन्नयस्स अंतियं पाउब्भवामि जाणामि ताव अहं अरहन्नगं किं पियधम्मे नो पियधम्मे ? दढधम्मो नो दढधम्मे ? सीलव्वयगुणे किं चालेति जाव परिच्चयति नो परिच्चयतित्तिकट्टु, एवं संपेहेमि २ ओहिं पउंजामि २ देवाणु० ! ओहिणा आभोएमि २ उत्तरपुरच्छिमं २ उत्तरविउव्वियं० ताए उक्किट्ठाए जेणेव समुद्दे जेणेव देवाणुप्पिया तेणेव उवागच्छामि २ देवाणु० उवसग्गं करेमि, नो चेव णं देवाणुप्पिया भीया वा०,

तं जण्णं सक्के देविंदे देवराया वदति सच्चे णं एसमट्ठे तं दिट्ठे णं देवाणुप्पियाणं इड्ढी जुई जसे जाव परक्कमे लद्धे पत्ते अभिसमन्नागए तं खामेमि णं देवाणु० ! खमंतु मरहंतु णं देवाणुप्पिया ! नाइभुज्जो २ एवं करणयाएत्तिकट्टु पंजलिउडे पायवडिए एयमट्ठं विनएणं भुज्जो २ खामेइ २ अरहन्नयस्स दुवे कुंडलजुयले दलयति २ जामेव दिसिं पाउब्भूए तामेव पडिगए।

**वृ.** 'संजत्तानावावाणियगा' सङ्गता यात्रा–देशान्तरगमनं संयात्रा तत्प्रधाना नौवाणिजकाः–पोतवणिजः संयात्रानौ वाणिजकाः 'अरहण्णगे समणोवासगे आवि होत्थ'त्ति न केवलमाढ्यादिगुणयुक्तः श्रमणोपासकश्चाप्यभूत्, 'गणिमं चे'त्यादि, गणिमं–नालिकेर-पूगीफलादि यद् गणितं सत् व्यवहारे प्रविशति, धरिमं–यत्तुलाधृतं सत् व्यवह्रियते, मेयं यत्सेतिकापल्यादिना मीयते, परिच्छेद्यं–यद् गुणतः परिच्छेद्यते–परीक्ष्यते वस्त्रमण्यादि,

'समियस्स य'त्ति कणिक्कायाश्च 'ओसहाणं'ति त्रिकटुकादीनां 'भेसज्जाण य'त्ति पथ्यानामा-

हारविशेषाणां अथवा ओषधानां–एकद्रव्यरूपाणां भेषजानां द्रव्यसंयोगरूपाणां आवरणानां–अङ्गरक्षकादीनां वोधिस्थप्रक्षराणां च 'अज्जे'त्यादि, आर्य !– हे पितामह ! तात !–हे पितः ! हे भ्रातः ! हे मातुल ! हे भागिनेय ! भगवता समुद्रेण अभिरक्ष्यमाणा यूयं जीवत, भद्रं च 'भे'त्ति भवतां भवत्विति गम्यते, पुनरपि लब्धार्थान् कृतकार्यान् अनघान् समग्रान्, अनघत्वं–निर्दूषणतया समग्रत्वम्–अहीनधनपरिवारतया, निजकं गृहं 'हव्वं'ति शीघ्रमागतान् पश्याम इतिकृत्वा–इत्यभिधाय 'सोमाहिं'ति निर्विकारत्वात् 'निद्धाहिं'ति सस्नेहत्वात् 'दीहाहिं'ति दूरं यावदवलोकनात् 'सप्पिवासाहिं'ति सपिपासाभिः पुनर्दर्शनाकाङ्क्षवतीभिर्दर्शनातृप्ताभिर्वा 'पप्पुयाहिं'ति प्लुताभिः अश्रुजलार्द्राभिः 'समाणिएसु'त्ति समापितेषु दत्तेषु नावीति गम्यते सरसरक्तचन्दनस्य दर्द्दरेण–चपेटाप्रकारेण पञ्चाङ्गुलितलेषु हस्तकेष्वित्यर्थः,

'अनुक्खित्तंसी'ति अनूक्षिप्ते–पश्चादुत्पाटिते धूपे पूजितेषु समुद्रवातेषु सांयात्रिकप्रक्रियया समुद्राधिपदेवपादेषु वा 'संसारियासु बलयबाहासु'त्ति स्थानान्तरादुचितस्थाननिवेशितेषु दीर्घकाष्ठलक्षणबाहुषु आवल्लकेष्विति सम्भाव्यते, तथा उच्छ्रितेषु–ऊर्द्धीकृतेषु सितेषु ध्वजाग्रेषु–पताकाग्रेषु पटुभिः पुरुषैः पटु वा यथा भवतीत्येवं प्रवादितेषु तूर्येषु जयिकेषु जयावहेषसर्वशकुनेषु–वायसादिषु गृहीतेषु राजवरशासनेषु–आज्ञासु पट्टकेषु वा प्रक्षुभितमहासमुद्ररवभूतमिव तदात्मकमिव तं प्रदेशमिति गम्यते 'तओ पुस्समाणवो वक्कमुयाहु'त्ति ततोऽनन्तरं मागधो मङ्गलवचनं ब्रवीति स्म इत्यर्थः, तदेवाह–सर्वेषामेव 'भे' भवतामर्थसिद्धिर्भवतु, उपस्थितानि कल्याणानि प्रतिहतानि सर्वपापानि–सर्वविघ्नाः, 'जुत्तो'त्ति युक्तः 'पुष्यो' नक्षत्रविशेषः चन्द्रमसा इहावसरे इति गम्यते, पुष्यनक्षत्रं हि यात्रायां सिद्धिकरं, यदाह–"अपि द्वादशमे चन्द्रे, पुष्यः सर्वार्थसाधन" इति, मागधेन तदुपन्यस्तं, विजयो मुहूर्तस्त्रिंशतो मुहूर्तानां मध्यात्, अयं देशकालः–एष प्रस्तावो गमनस्येति गम्यते 'वक्केउदाहिए'त्ति वाक्येउदाहृते हृष्टतुष्टाः कर्णधारो–निर्यामकः कुक्षिधारा– नौपार्श्वनियुक्तकाः आवेल्लकवाहकादयः गर्भे भवाः गर्भजाः–नौमध्ये उच्चावचकर्मकारिणः संयात्रानौवाणिजका–भाण्डपतयः,

–एतेषां द्वन्द्वः, 'वावरिंसु'त्ति व्यापृतवन्तः स्वस्वव्यापारेष्विति, ततस्तां नावं पूर्णोत्सङ्गां–विविधभाण्डभृतमध्यां पण्यमध्यां वा मध्यभागनिवेशितमहत्पण्यवस्तुत्वात् पूर्णमुखीं पुण्यमुखीं वा तथैव बन्धनेभ्यो विसर्जयन्ति–मुञ्चन्ति, पवनबलसमाहता–वातसामर्थ्यप्रेरिता 'ऊसियसिय'त्ति उच्छ्रितसितपटा, यानपात्रे हि वायुसङ्ग्रहार्थं महान् पट उच्छ्रितः क्रियते, एवं चासावुपमीयते विततपक्षेव गरुडयुवतिः गङ्गासलिलस्य तीक्ष्णाः ये श्रोतोवेगाः–प्रवाहवेगास्तैः सङ्क्षुभ्यन्ती २-प्रेर्य- माणा समुद्रं प्रतीति ऊर्मयो–महाकल्लोलाः तरङ्गा–ह्रस्वकल्लोलास्तेषां मालाः–समूहाः तत्सहस्राणि 'समतिच्छमाणि'त्ति समतिक्रामन्ती 'ओगाढ'त्ति प्रविष्टा, 'तालजंघ'मित्यादि तालो–वृक्षविशेषः स च दीर्घस्कन्धो भवति ततस्तालवज्जङ्घे यस्य तत्तथा, 'दिवंगयाहिं बाहाहिं'ति आकाशप्राप्ताभ्यमतिदीर्घाभ्यां बाहुभ्यां युक्तमित्यर्थः, 'मसिमूसग- महिसकालगं'ति मषी–कज्जलं मूषकः–उन्दुरविशेषः अथवा मषीप्रधाना मूषा–ताम्रादिधातु- प्रतापनभाजनं मषीमूषा महिषश्च प्रतीत एव तद्वत्कालकं यत्तत्तथा 'भरियमेहवण्णं'ति जलभृत- मेघवर्णमित्यर्थः, तथा लम्बोष्ठं 'निग्गयग्गदंतं'ति निर्गतानि मुखादग्राणि येषां ते तथा निर्गताग्रा दन्ता यस्य तत्तथा,

—'निल्लालियजमलजुयलजीहं'ति निर्ललितं - निष्कासितं यमलं - समं युगलं—द्वयं जिह्वयोर्येन तत्तथा 'आऊसियवयणगंडदेसं'ति आऊसियत्ति—प्रविष्टौ वदने गण्डदेशौ—कपोलभागौ यस्य तत्तथा 'चीणचिपिडनासियं'ति चीना—ह्रस्वा चिपिटा च—निम्ना नासिका यस्य तत्तथा 'विगयभुग्गभुमयं'ति विकृते—विकारवत्यौ भुग्ने—भग्ने इत्यर्थः, पाठान्तरेण 'भुग्ग भग्गे' अतीव वक्रे भ्रुवौ यस्य तत्तथा, 'खज्जोयगदित्तचक्खुरागं'ति खद्योतका—ज्योतिरिङ्गणाः तद्वद्दीप्तश्चक्षूरागो—लोचनरक्तत्वं यस्य तत्तथा, उत्त्रासनकं—भयंकरं विशालवक्षो—विस्तीर्णोरःस्थलं विशालकुक्षि—विस्तीर्णोदरदेशं एवं प्रलम्बकुक्षि 'पहसियपयलियपयडियगत्तं'त्ति प्रहसितानि—हसितुमारब्धानि प्रचलितानि च स्वरूपात् प्रवलिकानि वा—प्रजातवलीकानि प्रपतितानि च—प्रकर्षेण श्लथीभूतानि गात्राणि यस्य तत्तथा,

वाचनान्तरे 'विगयभुग्गभुमयपहसियपयलियपयडियफुलिंगखज्जोयदित्तचक्खुरागं'ति पाठः, तत्र विकृते भग्ने भ्रुवौ प्रहसिते च प्रचलिते प्रपतिते यस्य स्फुलिङ्गवत् खद्योतकवच्च दीप्तश्चक्षूरागश्च यस्य तत्तथा, 'पणच्चमाण'मित्यादि विशेषणपञ्चकं प्रतीतं, 'नीलुप्पले'त्यादौ गवलं—महिषशृङ्गं अतसी—मालवकदेशप्रसिद्धो धान्यविशेषः, 'खुरहारं'ति क्षुरस्येव धारा यस्य स तथा तमसिं—खड्गं, क्षुरो ह्यतितीक्ष्णधारो भवत्यन्यथा केशानाममुण्डनादिति क्षुरेणोपमा खड्गधरायाः कृतेति, अभिमुखमापतत् पश्यन्ति सर्वेऽपि सांयात्रिकाः, तत्रार्हन्नकवर्जा यत् कुर्वन्ति तद्दर्शयितुमुक्तमेव पिशाचस्वरूपं सविशेषं तेषां तद्दर्शनं चानुवदन्निदमाह—

'तए ण'मित्यादि, ततस्ते अर्हन्नकवर्जाः सांयात्रिकाः पिशाचरूपं वक्ष्यमाणविशेषणं पश्यन्ति, दृष्ट्वा च बहूनमिन्द्रादीनां बहून्युपयाचितशतान्युपयाचितवन्तस्तिष्ठन्तीति समुदायार्थः, अथवा 'तए णं'ति 'अरहन्नगवज्जा' इत्यादि गमान्तरं 'आगासदेवयाओ नच्चंति' इतोऽनन्तरं द्रष्टव्यम्,

अत एव वाचनान्तरे नेदमुपलभ्यते, उपलभ्यते चैवम्—'अभिमुहं आवयमाणं पासंति, तए णं ते अरहन्नगवज्जा नावावाणियगा भीया'इत्यादि, तत्र 'तालपिसायं'ति तालवृक्षाकारोऽतिदीर्घत्वेन पिशाचः तालपिशाचः तं, विशेषणद्वयं प्रागिव, 'फुट्टसिरं' ति स्फुटितम्—अबन्धत्वेन विकीर्णं शिर इति—शिरोजातत्वात् केशा यस्य स तथा तं भ्रमरनिकरवत् वरमाषराशिवत् महिषवच्च कालको यः स तथा तं, भृतमेघवर्णं तथैव, सूर्पमिव—धान्यशोधकभाजनविशेषवत् नखा यस्य स सूर्पनखः तं, 'फालसदृशजिह्व'मिति फालं—द्विपञ्चाशत्पलप्रमाणो लोहमयो दिव्यविशेषस्तच्च वह्निप्रतापितमिह ग्राह्यं तत्साधर्म्यं चेह जिह्वाया वर्णदीप्तिदीर्घत्वादिभिरिति, लम्बोष्ठं प्रतीतं धवलाभिर्वृत्ताभिरश्लिष्टाभिर्विशरारुत्वेन तीक्ष्णाभिः स्थिराभिः निश्चलत्वेन पीनाभिरुपचितत्वेन कुटिलाभिश्च वक्रतया दंष्ट्राभिरवगूढं—व्याप्तं वदनं यस्य स तथा तं,—

—विकोशितस्य—अपनीतकोशकस्य निरावरणस्येत्यर्थः धारास्योः—धाराप्रधान-खड्गयोर्यद्युगलं—द्वितयं तेन समक दृश्यौ—अत्यन्ततुल्ये तनुके—प्रतले चञ्चलं—विमुक्तस्थैर्यं यथा भवत्यविश्रामित्यर्थो गलन्त्यौ—रसातिलौल्यात् लालाविमुञ्चन्त्यौ रसलोले—भक्ष्यरसलम्पटे चपले—चञ्चले फुरफुरायमाणे—प्रकम्प्रे निर्लालिते—मुखान्निष्काशिते अग्रजिह्वे—अग्रभूते जिह्वे जिह्वाग्रे इत्यर्थो येन स तथा तं 'अवच्छियं'ति प्रसारितमित्येके, अन्ये तु यकारस्यालुप्तत्वात् 'अवयच्छियं'

प्रसारितमुखत्वेन दृश्यमानमित्याहुः, 'महल्ल'त्ति महत् विकृतं—बीभत्सं लालाभिः प्रगलत् रक्तं च तालु—काकुन्दं यस्य स तथा तं, तथा हिङ्गुलकेन—वर्णकद्रव्यविशेषेण सगर्भं कन्दरलक्षणं बिलं यस्य स तथा तमिव 'अंजणगिरिस्स'त्ति विभक्तिविपरिणामादञ्जन- गिरिं—कृष्णवर्णपर्वतविशेषं तथाऽग्निज्वालाउद्गिरत् वदनं यस्य स तथा तं,—

—अथवा 'अवच्छियेत्यादि हिंगलुए'त्यादि अग्निज्वाले'त्यादि प्रत्यंतरे च कर्मधारयेण वक्ष्यमाणवदनपदस्य विशेषणं कार्यं यस्य तमित्येवंरूपश्च वाक्यशेषो द्रष्टव्यः, तथा अग्निज्वाला उद्गिरद्वदनं यस्य स तथा तं, 'आऊसिय'त्ति सङ्कुचितं यदक्षचर्म—जलाकर्षकणकोशस्तद्वत् 'उड्ड'त्ति अपकृष्टौ अपकर्षवन्तौ सङ्कुचितौ गण्डदेशौ यस्य स तथा तं, अन्ये त्वाहुः—आमूषितानि—सङ्कुटितानि अक्षाणि—इन्द्रियाणि च चर्म च ओष्ठौ च गण्डदेशौ च यस्य स तथा तं, चीना ह्रस्वा 'चिवड'त्ति चिपटा—निम्ना वंका—वक्रा भग्नेव भग्ना—अयोघनकुट्टितेवेत्यर्थो नासिका यस्य स तथा तं, रोषादागतो 'धमधमेंत'त्ति प्रबलतया धमधमेंतत्ति शब्दं कुर्वाणो मारुतो—वायुर्निष्ठुरो—निर्भरः खरपरुषः—अत्यन्तकर्कशः शुषिरयोः—रन्ध्रयोर्यत्र तत्तथा, तदेवंविधमवभुग्नं—वक्रं नासिकापुटं यस्य तथा तं, इह च पदानामन्यथा निपातः प्राकृतत्वादिति, घाताय—पुरुषादिवधाय घाटाभ्यां वा—मस्तकावयवविशेषाभ्यां उद्भटं—विकरालं रचितमत एव भीषणं मुखं यस्य स तथा तं, ऊर्द्धमुखे कर्णशष्कुल्यौ—कर्णवती ययोस्तौ तथा तौ च महान्ति—दीर्घाणि विकृतानि लोमानि ययोस्तौ तथा तौ च 'संखालग'त्ति शङ्खवन्तौ च शङ्खयोः—अक्षिप्रत्यासन्नावयवविशेषयोः संलग्नौ—सम्बद्धावित्येके,—

—लम्बमानौ च—प्रलम्बौ चलितौ—चलन्तौ कर्णौ यस्य स तथा तं, पिङ्गले—कपिले दीप्यमाने—भासुरे लोचने यस्य स तथा तं, भृकुटिः-कोपकृतो भ्रूविकारः सैव तडिद्—विद्युद्यस्मिंस्तत्तथा तथाविधं पाठान्तरेण भृकुटितं—कृतभृकुटि ललाटं यस्य स तथा तं, नरशिरोमालया परिणद्धं—वेष्टितं चिन्हं—पिशाचकेतुर्यस्य स तथा तं, अथवा नरशिरोमालया यत्परिणद्धं—परिणहनं तदेव चिन्हं यस्य स तथा तं, विचित्रैः—बहुविधैर्गोनसैः—सरीसृपविशेषैः सुबद्धः परिकरः—सन्नाहो येन स तथा तं, 'अवहोलंत'त्ति अवधोलयन्तो डोलायमानाः 'फुप्फुयायंत'त्ति फूत्कुर्वन्तो ये सर्पाः वृश्चिका गोधाः उन्दुरान नकुलाः सरटाश्च तैर्विचिता विचित्रा—विविधरूपवती वैकक्षेण—उत्तरासङ्गेन मर्कटबन्धेन स्कन्धलम्बमात्रतया वा मालिका—माला यस्य स तथा तं,—

—भोगः—फणः स क्रूरो—रौद्रो ययोस्तौ तथा तौ च कृष्णसर्पौ च तौ धमधमायमानौ च तावेव लम्बमाने कर्णपूरे—कर्णाभरणविशेषौ यस्य स तथा तं, मार्जारश्च गालौ लगितौ—नियोजितौ स्कन्धयोर्येन स तथा तं, दीप्तं—दीप्तस्वरं यथा भवत्येवं 'घुघुयंत'त्ति घूत्कारशब्दं कुर्वाणो यो घूकः—कौशिकः स कृतो—विहितो 'कुंतल'त्ति शेखरकः शिरसि येन स तथा तं, घण्टानां रवणं शब्दस्तेन भीमो यः स तथा स चासौ भयङ्करश्चेति तं, कातरजनानां हृदयं स्फोटयति यः स तथा तं, दीप्तमट्टट्टहासं घण्टारवेण भीमादिविशेषणविशिष्टं विनिर्मुञ्चन्तं वसारुधिरपूयमांसमलैर्मलिना 'पोच्चड'त्ति विलीना च तनुः—शरीरं यस्य स तथा तं, उत्त्रासनकं यशालवक्षसं च प्रतीते,

—'पेच्छंत'त्ति प्रेक्ष्यमाणा—दृश्यमाना अभिन्ना—अखण्डा नखाश्च—नखरा रोम च मुखं च नयने च कर्णौ च यस्यां सा तथा सा चासौ वरव्याघ्रस्य चित्रा—कर्बुरा कृत्तिश्च—चर्मेति सा तथा

सैव निवसनं—परिधानं यस्य स तथा तं, सरसं—रुधिरप्रधानं यद्गजचर्म तद्वितत—विस्तारितं यत्र तत्तथा तदेवंविधं 'ऊसवियं'ति उच्छृतं—ऊर्ध्वीकृतं बाहुयुगलं येन स तथा तं, ताभिश्च तथाविधाभिः खरपरुषा—अतिकर्कशाः अस्निग्धाः—स्नेहविहीना दीप्ता—ज्वलन्त्य इवोपतापहेतुत्वात् अनिष्टा—अभिलाषाविषयभूताः अशुभाः स्वरूपेण अप्रियाः अप्रीतिकरत्वेन अकान्ताश्च विस्वरत्वेन या वाचस्ताभिः त्रस्तान् कुर्वाणं—त्रस्तयन्तं तर्जयन्तं च पश्यन्ति स्म,—

—पुनस्तत्तालपिशाचरूपं 'एज्जमाणं'ति नावं प्रत्यागच्छत् पश्यन्ति 'समतुरंगेमाणे'त्ति आश्लिष्यन्तः, स्कन्दः—कार्तिकेयः रुद्रः—प्रतीतः शिवो—महादेवः वैश्रमणो—यक्षनायकः नागो—भवनपतिविशेषः भूतयक्षा—व्यन्तरभेदाः आर्य्या—प्रशान्ता प्रसन्नरूपा दुर्गा—कोट्टक्रिया—सैव महिषारूढरूपा, पूजाभ्युपगमपूर्वकाणि प्रार्थनानि उपयाचटितान्युच्यन्ते, उपयाचितवन्तो—विदधतस्तिष्ठन्ति स्मेति, अर्हन्नकवर्जानामियमितिकर्त्तव्यतोक्ता, अधुनाऽर्हन्नकस्य तामाह—

'तए णं'मित्यादि, 'अपत्थियपत्थिय' त्ति अप्रार्थितं—यत्केनापि न प्रार्थ्यते तत्प्रार्थ्यति यः स तथा तदामन्त्रणं पाठान्तरेण अप्रस्थितः सन् यः प्रस्थित इव मुमूर्षुरित्यर्थः स तथोच्यते तस्यामन्त्रणं हे अप्रस्थितप्रस्थित !, यावत्करणात् 'दुरंतपं तलक्खणे'त्ति दुरन्तानि—दुष्पर्यन्तानि प्रान्तानि—अपसदानि लक्षणानि यस्य स तथा तस्यामन्त्रणं 'हीणपुण्णचाउद्दसी' इति हीना—असमग्रा पुण्या—पवित्रा चतुर्दशी तिथिर्यस्य जन्मनि स तथा, चतुर्दशीजातो हि किल भाग्यवान् भवतीति आक्रोशे तदभावो दर्शित इति, 'सिरिहिरिधीकित्तिवज्जिय'त्ति प्रतीतं, 'तवसीलव्वए'त्यादि, तत्र शीलव्रतानि—अणुव्रतानि गुणाः—गुणव्रतानि विरमणानि—रागादिविरतिप्रकाराः प्रत्याख्यानानि—नमस्कारसहितादीनि पौषधोपवासः—अष्टम्यादिषु पर्वदिनेषूवसनं आहारशरीरसत्काराब्रह्मव्यापारपरिवर्जनमित्यर्थः, एतेषां द्वन्द्वः, 'चालित्तए'त्ति भङ्गकान्तरगृहीतान् भङ्गकान्तरेण कर्तुं क्षोभयितुं—एतान्येवं परिपालयाम्युतोज्झामीति क्षोभविषयान् कर्तुं खण्डयितुं—देशतः भङ्क्तुं सर्वतः उज्झितुं—सर्वस्या देशविरतेस्त्यागेन परित्यक्तुं—सम्यक्त्वस्यापि त्यागत इति,

'दोहिं अंगुलीहिं'ति अङ्गुष्ठकतर्जनीभ्यां अथवा तर्जनीमध्यामाभ्यामिति, 'सत्तट्ठतलप्पमाणमेत्तायं'ति तलो—हस्ततलः तालाभिधानो वाऽतिदीर्घवृक्षविशेषः स एव प्रमाणं—मानं तलप्रमाणं सप्ताष्टौ वा सप्ताष्टानि तलप्रमाणानि परिमाणं येषां ते सप्ताष्टतलप्रमाणमात्रास्तान् गगनभागान् यावदिति गम्यते 'उड्ढवेहासं'त्ति ऊर्ध्वं विहायसि—गगने 'उव्विहामि'त्ति नयामि 'जेणं तुमं'ति येन त्वं 'अट्टदुहट्टवसट्टे'त्ति आर्त्तस्य—ध्यानविशेषस्य यो 'दुहट्ट'त्ति दुर्घटः दुःस्थगो दुर्निरोधो वशः—पारतन्त्र्यं तेन ऋतः—पीडितः आर्त्तदुर्घटवशार्त्तः, किमुक्तं भवति ?—

असमाधिप्राप्तः, 'ववरोविज्जसि'त्ति व्यपरोपयिष्यसि अपेतो भविष्यसीत्यर्थः, 'चालित्तए'त्ति इह चलनमन्यथाभावत्वं, कथं ?—'खोभित्तए'त्ति क्षोभयितुं संशयोत्पादनतः तथा 'विपरिणामित्तए'त्ति विपरिणमयितुं विपरीताध्यवसायोत्पादनत इति, 'संते'इत्यादौ यावत्करणात् 'तंते परितंते' इति द्रष्टव्यं, तत्र श्रान्तो वा मनसा तान्तः—कायेन खेदवान् परितान्तः—सर्वतः खिन्नः निर्विण्णः—तस्मादुपसर्गकरणादुपरतः, 'लद्धे'त्यादि, तत्र लब्धा—उपार्जनतः प्राप्ता तत्प्राप्तेरभिसमन्वागता—सम्यगासेवनतः, 'आइक्खइ'इत्यादि, आख्याति सामान्येन भाषते विशेषतः, एतदेव द्वयं क्रमेण पर्यायशब्दाभ्यामुच्यते—प्रज्ञापयति प्ररूपयति,

'देवेण वा दावेण' त्यादाविदं द्रष्टव्यमपरं 'किन्नरेण वा किंपुरिसेण वा महोरगेण वा गंधव्वेण व'त्ति तत्र देवो–वैमानिको ज्योतिष्को वा दानवो–भवनपतिः शेषा व्यन्तरभेदाः, 'नो सद्दहामि'-इत्यादि न श्रद्दधे–प्रत्ययं न करोमि 'नो पत्तियामि' तत्र प्रीतिकं–प्रीतिं न करोमि न रोचयामि–अस्माकमप्येवंभूता गुणप्राप्तिर्भवत्वेवं न रुचिविषयीकरोमीति, 'पियधम्मे'त्ति धर्मप्रियो दृढधर्मा–आपद्यपि धर्मादविचलः, यावत्करणात् ऋद्ध्यादिपदानि दृश्यानि, तत्र 'इड्ढि'त्ति गुणर्द्धिःद्युतिः–आन्तरं तेजः यशः–ख्यातिः बलं–शारीरं वीर्यं–जीवप्रभवं पुरुषकारः–अभिमानविशेषः पराक्रमः–स एव निष्पादितस्वविषयः लब्धादिपदानि तथैव,

**मू. (८८)** *तते णं से अरहन्नए निरुवसग्गमितिकट्ठु पडिमं पारेति, तए णं ते अरहन्नगपामोक्खा जाव वाणियगा दक्खिणानुकूलेणं वाएणं जेणेव गंभीरए पोयपट्टणे तेणेव उवागच्छंति २ पोयं लंबेंति २ सगडसागडं सज्जेंति २ गणिमं ४ सगडि० संकामेंति २ सगडी० जोएंति २*

*जेणेव मिहिला तेणेव उवा० २ मिहिलाए रायहाणीए बहिया अग्गुज्जाणंसि सगडीसगडं मोएइ २ मिहिलाए रायहाणीए तं महत्थं महग्घं महरिहं विउलं रायरिहं पाहुडं कुंडलजुयलं च गेण्हंति २ अनुपविसंति २ जेणेव कुंभए तेणेव उवा० २ करयल० तं महत्थं दिव्वं कुंडलजुयलं उवणेंति २ तते णं कुंभए तेसिं संजत्तगाणं जाव पडिच्छइ २ मल्लीं विदेहवररायकन्नं सद्दावेति २ तं दिव्वं कुंडलजुयलं मल्लीए विदेहवररायकन्नगाए पिणद्धति २ पडिविसज्जेति,*

*तते णं से कुंभए राया ते अरहन्नगपामोक्खे जाव वाणियगे विपुलेणं असनवत्थगंध जाव उस्सुक्कं वियरति २ रायमग्गमोगाढेइ आवासे वियरति पडिविसज्जेति, तते णं अरहन्नगसंजत्तगा जेणेव रायमग्गमोगाढे आवासे तेणेव उवागच्छंति २ भंडववहरणं करेंति २ पडिभंडं गेण्हंति २ सगडी० भरेंति जेणेव गंभीरए पोयपट्टणे तेणेव २ पोतवहणं सज्जेंति २ भंड संकामेंति दक्खिणाणु०*

*जेणेव चंपा पोयट्ठाणे तेणेव पोयं लंबेंति २ सगडी० सज्जेंति २ तं गणिमं ४ सगडी० संकामेंति २ जाव महत्थं पाहुडं दिव्वं च कुंडलजुयलं गेण्हंति २ जेणेव चंदच्छाए अंगराया तेणेव उवा० तं महत्थं जाव उवणेंति, तते णं चंदच्छाए अंगराया तं दिव्वं महत्थं च कुंडलजुयलं पडिच्छति २ ते अरहन्नगपामोक्खे एवं वदासी– तुब्भे णं देवा० ! बहूणि गामागार जाव आहिंडह लवणसमुद्दं च अभिक्खणं २ पोयवहणेहिं ओगाहेह गाहह तं अत्थियाइं भे केइ कहिंचि अच्छेरए दिट्ठपुव्वे ?, तते णं ते अरहन्नपामोक्खा चंदच्छायं अंगरायं एवं वदासी–एवं खलु सामी ! अम्हे इहेव चंपाए नयरीए अरहन्नपामोक्खा बहवे संजत्तगा नावावाणियगा परिवसामो,*

*–तते णं अम्हे अन्नया कयाइं गणिमं च ४ तहेव अहीनमतिरित्तं जाव कुंभगस्स रन्नो उवणेमो, तते णं से कुंभए मल्लीए विदेहरायवरकन्नाए तं दिव्वं कुंडलजुयलं पिणद्धेति २ पडिव्विसज्जेति, तं एस णं सामी ! अम्हेहिं कुंभरायभवणंसि मल्ली विदेहे अच्छेरए दिट्ठे तं नो खलु अन्ना कावि तारिसिया देवकन्ना वा जाव जारिसिया णं मल्लिविदेहा, तते णं चंदच्छाए ते अरहन्नगपामोक्खे सक्कारेति सम्माणेति २ पडिवसज्जेति, तते णं चंदच्छाए वाणियगजणियहासे दूतं सद्दावेति जाव जइविय णं सा सयं रज्जसुका, तते णं ते दूते हट्ठे जाव पहारेत्थ गमणाए २ ।*

**वृ.** 'उस्सुक्कं वियरइ'त्ति शुल्काभावमनुजानातीत्यर्थः, 'गामागारे'त्यादाविदं द्रष्टव्यं– 'नगरखेडकब्बडमडंबदोणमुहपट्टणनिगमसन्निवेसाइं'इति तत्र ग्रामो–जनपदाध्यासितः आकरो हिर-

ण्याद्युत्पत्तिस्थानं नगरं-करविरहितं खेटं-धूलीप्राकारं कर्बटं-कुनगरं मडम्बं-दूरवर्त्तिसन्निवेशान्तरं द्रोमुखं-जलपथस्थलपथयुक्तं पत्तनं-जलपथस्थलपथयोरेकतरयुक्तं निगमो-वणिग्जनाधिष्ठितः सन्निवेशः-कटकादीनामावासः, 'देवकन्नगा वे' त्यादाविदं दृश्यं-'असुरकन्ना वा नागकन्ना वा जक्खकन्ना वा गंधव्वकन्ना वा रायकन्ना वे'ति, 'वाणियगजणियहासे' त्ति नैगमोत्पादितमल्ली-विषयानुराग इत्यर्थः २ ॥

**मू. (८९)** *तेणं कालेणं २ कुणाला नाम जणवए होत्था, तत्थ णं सावत्थी नामं नगरी होत्था, तत्थ णं रुप्पी कुणालाहिवई नामं राया होत्था, तस्स णं रुप्पिस्स धुया धारिणीए देवीए अत्तया सुबाहुनामं दारिया होत्था, सुकुमाल० रूवेण य जोव्वणेणं लावण्णेण य उक्किट्ठा उक्किट्ठसरीरा जाया यावि होत्था, तीसे णं सुबाहुए दारियाए अन्नदा चाउम्मासियमज्जणए जाए यावि होत्था, तते णं से रुप्पी कुणालाहिवई सुबाहुए दारियाए चाउम्मासियमज्जणयं उवट्ठियं जाणति २ कोडुंबियपुरिसे सद्दावेति २ एवं वयासी-एवं खलु देवाणुप्पिया ! सुबाहुए दारियाए कल्लं चाउम्मासियमज्जणए भविस्सति तं कल्लं तुब्भे णं रायमग्गमोगाढंसि चउक्कंसि जलथलयदसद्धवन्नमल्लं साहरेह जाव सिरिदामगंडे ओलइन्ति,*

*तते णं से रुप्पी कुणालाहिवती सुवन्नगरसेणिं सद्दावेति २ एवं वयासी-खिप्पामेव भो देवाणुप्पिया ! रायमग्गमोगाढंसि पुप्फमंडवंसि नानाविहपंचवन्नेहिं तंदुलेहिं नगरं आलिहह तस्स बहुमज्झदेसभाए पट्टयं रएह २ जाव पच्चप्पिणंति, तते णं से रुप्पी कुणालाहिवई हत्थिखंधवरगए चाउरंगिणी सेनाए महया भड० अंतेउरपरियाल संपरिवुडे सुबाहुं दारियं पुरतो कट्टु जेणेव रायमग्गे जेणेव पुप्फमण्डवे तेणेव उवागच्छति २ हत्थिखंधातो पच्चोरूहति २ पुप्फमंडवं अनुपविसति २ सीहासनवरगए पुरत्थाभिमुहे सन्निसन्ने, तते णं ताओ अंतेउरियाओ सुबाहुं दारियं पट्टयंसि दुरुहेंति २ सेयपीतएहिं कलसेहिं ण्हाणेंति २ सव्वालंकारविभूसियं करेंत २ पिउणो पायं वंदिउं उवणेंति, तते णं सुबाहुदारिया जेणेव रुप्पी राया तेणेव उवागच्छति २ पायग्गहणं करेति, तते णं से रुप्पी राया सुबाहुं दारियं अंके निवेसेति २ सुबाहुए दारियाए रूवेण य जो० लाव० जाव विम्हिए वरिसधरं सद्दावेति २ एवं वयासी-*

*तुमण्णं देवाणुप्पिया ! मम दोच्चेणं बहूणि गामागरनगरगिहाणि अनुपविससि, तं अत्थि याइं ते कस्सइ रन्नो वा ईसरस्स वा कहिंचि एयारिसए मज्जणए दिट्ठपुव्वे जारिसए णं इमीसे सुबाहुदारियाए मज्जणए ?, तते णं से वरिसधरे रुप्पिं करयल० एवं व०-एवं खलु सामी ! अहं अन्नया तुब्भेणं दोच्चेणं मिहिलं गए तत्थ णं मए कुंभगस्स रन्नो धूयाए पभावतीए देवीए अत्तयाए मल्लीए विदेहरायकन्नगाए मज्जणए दिट्ठे,*

*तस्स णं मज्जणगस्स इमे सुबाहुए दारियाए मज्जणए सयसहस्सइमंपि कलं न अग्घेति, तए णं से रुप्पी राया वरिसधरस्स अंतिए एयमट्ठं सोच्चा णिसम्म सेसं तहेव मज्जणगजणितहासे दूतं सद्दावेति २ एवं वयासी०-जेणेव मिहीला नयरी तेणेव पहारित्थगमणाए ३ ।*

**मू. (९०)** *तेणं कालेणं २ कासी नाम जनवए होत्था, तत्थ णं वाणारसीनाम नगरी होत्था, तत्थ णं संखे नामं कासीराया होत्था, तते णं तीसे मल्लीए विदेहरायवरकन्नाए अन्नया कयाइं तस्स दिवस्स कुंडलजुयलस्स संधी विसंघडिए यावि होत्था, तते णं से कुंभए राया सुवन्नगार- सेणिं*

*विउलातिं भोगभोगाइं भुंजमाणी विहरति कल्लाकल्लिं च अमयफलातिं उवनेति ।*

**वृ.** 'पोयवहणसंपराएसुं' ति सम्परायः-सङ्ग्रामः तद्वधानि भीषणानि पोतवहनकार्याणि तानि तथोच्यन्ते तेषु, देवताविशेषणानि विजयचौरविशेषणवद् गमनीयानि, 'असिखेडगवग्गहत्थ' त्ति खड्गफलकाभ्यां व्यग्रौ हस्तौ यस्याः सा तथा, 'रत्तगंडमंसुयाइं' ति रक्तौ-रञ्जितौ गण्डौ येस्तानि रक्तगण्डानि तानि श्मश्रूणि-कूर्चकेशाः ययोस्ते रक्तगण्डश्मश्रुके 'माउयाहिं उवसोहियाइं' ति इह माउयाउ उत्तरौष्ठरोमैणि सम्भाव्यन्ते अथवा 'माउया' सख्यो मातरो वा ताभिः उपशोभिते-समारचितकेशत्वादिना जनितशोभे उपशोभिते वा-निर्मलीकृते शिरसी-मस्तके छित्त्वेति वाक्यशेषः,

'जण्णं देवाणुप्पिए' त्यादि, यं कञ्चन प्रेष्याणामपि प्रेष्यं देवानुप्रिया वदिष्यति-उपदेक्ष्यति यदुतायमाराध्यः 'तस्स' ति तस्यापि आस्तां भवत्याः आज्ञा-अवश्यं विधेयतया आदेशः उपपातः-सेवावचनं-अनियमपूर्वक आदेश एव निर्देशः-कार्याणि प्रति प्रश्ने कृते यन्नियतार्थमुत्तरमेतेषां समाहारद्वन्द्वः तत्र, अथवा यद्देवानां प्रिया वदिष्यति 'तस्स' त्ति तत्र आज्ञादिरूपे स्थास्यामः-वर्त्तिष्याम इति, 'अमयफलाइं' ति अमृतोपमफलानि ॥

**मू. (११३)** *तते णं सा रयणदीवदेवया सक्कवयणसंदेसेणं सुट्ठिएणं लवणाहिवइणा लवणसमुद्दे तिसत्तखुत्तो अनुपरियट्टियव्वेत्ति जं किंचि तत्थ तणं वा पत्तं वा कट्टं वा कयवरं वा असुइ पूतियं दुरभिगंधमचोक्खंतं सव्वं आहुणिय २ तिसत्तखुत्तो एगंते एडेयव्वंतिकट्टु निउत्ता,*

*तते णं सा रयणद्दीवदेवया ते मागंदियदारए एवं वदासी-एवं खलु अहं देवाणुप्पिया ! सक्क० सुट्ठिय० तं चेव जाव निउत्ता, तं जाव अहं देवा० ! लवणसमुद्दे जाव एडेमि ताव तुब्भे इहेव पासायवडिंसए सुहंसुहेणं अभिरममाणा चिट्ठह, जति णं तुब्भे एयंसि अंतरंसि उव्विग्गा वा उस्सुया वा उप्पुया वा भवेज्जाह तो णं तुब्भे पुरच्छिमिल्लं वनसंडं गच्छेज्जाह, तत्थ णं दो ऊऊ सया साहीणा तं०-पाउसे य वासारत्ते य ।*

**वृ.** 'सक्कवयणसंदेसेणं' ति शक्रवचनं चासौ सन्देशश्च-भाषकान्तरेण देशान्तरस्थस्य भणनं शक्रवचनसन्देशः तेन, अशुचिकं-अपवित्रं समुद्रस्याशुद्धिमात्रकारकं पत्रादीति प्रक्रमः पूतिकं-जीर्णतया कुथितप्रायं दुरभिगन्धं-दुष्टगन्धं, किमुक्तं भवति ?-अचोक्षं-अशुद्धं, 'तिसत्तखुत्तो' त्ति त्रिभिर्गुणिताः सप्त त्रिसप्त त्रिसप्तवाराः त्रिसप्तकृत्व एकविंशतिवारानित्यर्थः, 'एयंसि अंतरंसि' त्ति एतस्मिन्नवसरे विरहे वा 'उव्विग्ग' त्ति ऊद्विग्नौ उद्वेगवन्तौ 'उप्पिच्छ' त्ति भीतौ पाठान्तरेण उत्प्लुतौ-भीतावेव 'उस्सुय' त्ति उत्सुकौ अस्मत्समागमनं प्रति, 'तत्थ णं दो उदू' इत्यादि, तत्र-पौरस्त्ये नवखण्डे द्वौ ऋतू-कालविशेषौ सदा स्वाधीनौ-अस्तित्वेन स्वायत्तौ, तज्जन्यानां वनस्पतिविशेषपुष्पादीनां सद्भावात्, तद्यथा-प्रावृट् वर्षारात्रश्च, आषाढश्रावणौ भाद्रपदाश्वयुजौ चेत्यर्थः, अनयोरेव रूपकालङ्कारेण वर्णनाय गीतिकाद्वयम्, ।

**मू. (११४)** *तत्थ उ कंदलसिलिंधदंतो निउरवरपुप्फपीवरकरो ।*
*कुडयज्जुणणीवसुरभिदाणो पाउसउऊगयवरो साहीणो ॥*

**वृ.** 'तत्थ उ' इत्यादि, तत्रैव पूर्ववनखण्डे नान्यत्रेदीच्ये पश्चिमे वेत्यर्थः, कन्दलानि च-प्रत्यग्रलताः सिलिन्ध्राश्च-भूमिस्फोटाः, अन्ये त्वाहुः-कन्दलप्रधानाः सिलिन्ध्रा-वृक्षविशेषा ये

प्रावृषि पुष्यन्ति सितकुसुमाश्च भवन्ति त एव कुसुमिताः सन्तो दन्ता यस्य धवलत्वासाधर्म्यात् सः कन्दलसिलीन्ध्रदन्तः, इह च सिलीन्ध्राणां कुसुमितत्वविशेषणं सामर्थ्याद् व्याख्यातं, कुसुमाभावे तेषां प्रावृषोऽन्यत्रापि कालान्तरे सम्भवादिति, तथा 'निउरो' त्ति वृक्षविशेषः तस्य यानि वरपुष्पाणि तान्येव पीवरः—स्थूरः करो यस्य स तथा, कुटजार्जुननीपा—वृक्षविशेषास्तत्पुष्पाणि कुटजार्जुननीपानि तान्येव सुरभिदानं—सुगन्धिमदजलं यस्य स तथा, प्रावृद् ऋतुरेव गजवरः प्रावृड्ऋतुगजवरः स्वाधीनः, इह सिलिन्ध्रादिवनस्पतीनां कालान्तराकृतकुसुमानां सदाकुसुमितानां भावादात्मवशोऽस्तीति भावः ।

मू. (११५) *तत्थ य—सुरगोवमणिविचित्तो दद्दुरकुलरसियउज्झररवो ।*
*बरहिणविंदपरिणद्धसिहरो वासारत्तो उऊपव्वतो साहीणो ॥*

वृ. तथा तत्रैव वनखण्डे सुरगोपा—इन्द्रगोपकाभिधाना रक्तवर्णाः कीटास्त एव मणयः पद्मरागादयः तैर्विचित्रः—कर्बुरो यः स तथा, तथा दर्दुरकुलरसितं—मण्डूकसमूहरटितं तदेव उज्झररवो—निर्झरशब्दो यत्र स तथा, बर्हिणवृन्देन—शिखण्डिसमूहेन परिणद्धानि—परिगतानि शिखराणि ऋतुपक्षे वृक्षसम्बन्धीनि पर्वतपक्षे कूटानि यत्र स तथा वर्षारात्रऋतुरेव पर्वत इति विग्रहः, स्वाधीनः—स्वायत्तस्तद्धर्माणां सर्वदा तत्र भावादिति ।

मू. (११६) *तत्थ णं तुब्भे देवाणुप्पिया ! बहुसु वावीसु य जाव सरसरपंतियासु बहूसु आलीघरएसु य मालीघरएसु य जाव कुसुमघरएसु य सुहंसुहेणं अभिरममाणा विहरेज्जाह, जति णं तुब्भे एत्थवि उव्विग्गा वा उस्सुया वा उप्पुया वा भवेज्जाह तो णं तुब्भे उत्तरिल्लं वणसंडं गच्छेज्जाह, तत्थ णं दो ऊऊ सया साहीणा तं०—सरदो य हेमंतो य ।*

वृ. 'वावीसु' इत्यादि प्रथमाध्ययनवत्, 'सरओ हेमंतो य' त्ति कार्त्तिकमार्गशीर्षौ पौषमाघौ चेत्यर्थः, इहापि गीतिकाद्वयं—

मू. (११७) *तत्थ उ सणसत्तवण्णकउओ नीलुप्पलपउमनलिणसिंगो ।*
*सारसचक्कवायरवितघोसो सरयऊऊगोवती साहीणो ॥*

वृ. 'तत्थ उ' इत्यादि, तत्रैव सनो—वल्कप्रधानो वनस्पतिविशेषः सप्तपर्णः—सप्तच्छदस्तयोः पुष्पाणि सनसप्तपर्णानि तान्येव ककुदं—स्कन्धदेशविसेषो यस्य स तथा, नीलोत्पलपद्मनलिनानि—जलजकुसुमविशेषास्तान्येव शृङ्गे यस्य स तथा, सारसाश्चक्रवाकाश्च—पक्षिविशेषां 'रविय' ति रुतं तदेव घोषो—नर्दितं यस्य स तथा शरदतुरेव गोपतिः—गवेन्द्रः शरदतुगोपतिः स्वाधीनः ।

मू. (११८) *तत्थ य सियकुंदधवलजोण्हो कुसुमितलोद्धवणसंडमंडलतलो ।*
*तुसारदगधारपीवरकरो हेमंतऊऊससी सया साहीणो ॥*

वृ. तथैव तत्र वनखण्डे सितानि यानि कुन्दानि—कुन्दाभिधनवनस्पतिकुसुमानि तान्येव धवला ज्योत्स्ना—चन्द्रिका यस्य स तथा, पाठान्तरेण 'सितकुंदविमलजोण्हो' त्ति स्पष्टं, कुसुमितो यो लोध्रवनखण्डः स एव मण्डलतलं—बिम्बं यस्य स तथा, तुषारं—हिमं तत्प्रधानाः या उदकधारा—उदकबिन्दुप्रवाहास्ता एव पीवराः—स्थूलाः कराः—किरणा यस्य स तथा, हेमन्तऋतुरेव शशी—चन्द्र इति विग्रहः स्वाधीनः ।

मू. (११९) *तत्थ णं तुब्भे देवाणुप्पिया ! बावीसु य जाव विहरेज्जाह, जति णं तुब्भे तत्थवि उव्विग्गा वा जाव उस्सुया वा भवेज्जाह तो णं तुब्भे अवरिल्लं वनसंडं गच्छेज्जाह, तत्थ णं दो ऊऊ साहीणा, तं०—*

वृ. तथैव 'वसंते गिम्हे य'त्ति फाल्गुनचैत्री वैशाखज्येष्ठी चेत्यर्थः, ।

मू. (१२०) *वसंते य गिम्हे य, तत्थ उ सहकारचारुहारो किंसुयकण्णियारासोगमउडो ऊसिततिलगबउलायवत्तो वसंतउऊणरवती साहीणो ।*

वृ. 'तत्थ उ'इत्यादि गीतिकाद्वयं, तत्र च सहकाराणि—चूतपुष्पाणि तान्येव चारुर्हारो यस्य स तथा, किंशुकानि—पलाशस्य कुसुमानि कर्णिकाराणि—कर्णिकारस्य अशोकानि चाशोकस्य तान्येव मुकुटं—किरीटं यस्य स तथा, उच्छ्रितं—उन्नतं तिलकबलुकानितिलकबकुलकुसुमानि तान्येवातपत्रं—छत्रं यस्य स तथा, वसन्ति ऋतुर्नरपतिः स्वाधीनः प्रतीतम् ।

मू (१२१) *तत्थ य पाडलसिरीससलिलो मलियावासंतियधवलवेलो । सीयलसुरभिअनिलमगरचरिओ गिम्हऊऊसागरो साहीणो ।।*

वृ. तत्र पाटलाशिरीषाणिपाटलाशिरीषकुसुमानि तान्येव सलिलं यत्र स तथा मल्लिका—विचकिलो वासन्तिका—लताविशेषः तत्कुसुमानि मल्लिकावासन्तिकानि तान्येव धवला—सिता वेला—जलवृद्धिर्यस्य स तथा, शीतलः सुरभिश्च योऽनिलो—वायुः स एव मकरचरितं यत्र स तथा, इह चानिलशब्दस्य अकारलोपः प्राकृतत्वात् 'अरण्णं रण्णं अलावं लाउय'मित्यादिवत्, ग्रीष्मऋतुसागरःस्वाधीन इति ।

मू. (१२२) *तत्थ णं बहुसु जाव विहरेज्जाह, जति णं तुब्भे देवा० ! तत्थवि उव्विग्गा उस्सुया भवेज्जाह तओ तुब्भे जेणेव पासायवडिंसए तेणेव उवागच्छेज्जाह, ममं पडिवालेमाणा २ चिट्ठेज्जाह, मा णं तुब्भे दक्खिणिल्लं वनसंडं गच्छेज्जाह,*

*—तत्थ णं महं एगे उग्गविसे चंडविसे घोरविसे महाविसे अइकायमहाकाए जहा तेयनिसग्गे मसिमहिसामूसाकालए नयणविसरोसपुण्णे अंजणपुंजनियरप्पगासे रत्तच्छे जमलजुयलचंचलचलंतजीहे धरणियलवेणिभूए उक्कडफुडकुडिलजडिलकक्खडवियडफडाडोवकरणदच्छे लोगाहारधम्ममाणधमधमेंतघोसे अणागलियचंडतिव्वरोसे समुहिं तुरियं चवलं धमधमंतदिट्ठीविसे सप्पे य परिवसति,*

*मा णं तुब्भं सरीरगस्स वावत्ती भविस्सइ, ते मांगदियदारए दोच्चंपि तच्चंपि एवं वदति २ वेउव्वियसमुग्घाएणं समोहणति २ ताए उक्किट्ठाए लवणसमुद्दं तिसत्तखुत्तो अनुपरियट्टेउं पयत्ता यावि होत्था ।*

वृ. 'उग्गविसे' इत्यादि, उग्रं दुर्जनत्वाद्विषं यस्य स उग्रविषः, एवं सर्वत्र, नवरं चण्डं झगिति व्यापकत्वात्, पाठान्तरे तु 'भोगविसे' इति तत्र भोगः शरीरं स एव विषं यस्येति, घोरं परम्परया पुरुषसहस्रस्यापि घातकत्वात्, महत् जम्बूद्वीपप्रमाणशरीरस्यापि विषतयाऽऽभवनात्, कायान्—शरीराणि शेषाहीनामतिक्रान्तोऽतिकायः, अत एव महाकायः, ।

'जहा तेयनिसग्गे'त्ति शेषविशेषणानि यथा गोशालकचरिते तथेहाध्येतव्यानीत्यर्थः, तानि चैतानि 'मसिमहिसमूसाकालगे' मषी च महिषश्च मूषा च—स्वर्णादितापनभाजनविशेषः इति

द्वन्द्वः एता इव कालको यः स तथा, 'नयणविसरोसपुण्णो' नयनविषेण–दृष्टिविषेण रोषेण च पूर्ण इत्यर्थः, 'अंजणपुंजनिगरप्पगासे' कज्जलपुञ्जानां निकर इव प्रकाशते यः स तथा, 'रत्तच्छे जमलजुयलचंचलचलंतजीहे' यमलंसहवर्त्ति युगलं–द्वयं चञ्चलं च यथा भवत्येवं चलन्त्योः–अतिचपलयोर्जिह्वयोर्यस्य स तथा, 'धरणितलवेणिभूए' धरणीतलस्य वेणीभूतो–वनिताशिरसः केशबन्धविशेष इव यः कृष्णत्वदीर्घत्वश्लक्ष्णत्वपश्चाद्भागत्वादिसाधर्म्यात् स तथा, 'उक्कडफुडकुडिलजडिलकक्खडविकड-फडाडोवकरणदच्छे' उत्कटो–बलवताऽन्येनाध्वंसनीयत्वात् स्फुटो–व्यक्तः प्रयत्नविहितत्वात् कुटिलः–तत्स्वरूपत्वात् जटिलः–स्कन्धदेशे केसरिणामिवाहीनां केसरसद्भावात् कर्कशो–निष्ठुरो बलवत्त्वात् विकटश्च–विस्तीर्णो यः स्फटाटोपः–फणासंरम्भः तत्करणे दक्षो यः स तथा,

'लोहागरधम्ममाणधमधमेंतघोसे' लोहाकरे ध्मायमानं–अग्निना ताप्यमानं लोहमिति गम्यते तस्येव यद्धमधमायमानो–धमधमेतिवर्णव्यक्तिमिवोत्पादयन् घोषः–शब्दो यस्य स तथा, 'अनागलियचंडतिव्वरोसे' अनर्गलितः–अनिवारितोऽनाकलितो वा–अप्रमेयश्चण्डतीव्रः–अत्यर्थतीव्रो रोषो यस्य स तथेति, 'समुहिं तुरियं चवलं धमंतं' ति शुनो मुखं श्वमुखं तस्येवाचरणं श्वमुखि–कौलेयकस्येव भषणतां त्वरितचपलं–अतिचटुलतया धमन्–शब्दं कुर्वन्नित्यर्थः !

**मू. (१२३)** *तए णं ते मागंदियदारया तओ मुहुत्तंतरस्स पासायवडिंसए सइं वा रतिं वा धितिं वा अलभमाणा अन्नमन्नं एवं वदासी–एवं खलु देवा० ! रयणदीवदेवया अम्हे एवं वदासी–एवं खलु अहं सक्कवयणसंदेसेणं सुट्ठिएणं लवणाहिवइणा जाव वावत्ती भविस्सइ,*

*तं सेयं खलु अम्हं देवाणुप्पिया ! पुरच्छिमिल्लं वनसंडं गमित्तए, अन्नमन्नस्स एयमट्ठं पडिसुणेंति २ जेणेव पुरच्छिमिल्ले वनसंडे तेणेव उवागच्छंति २ तत्थ णं वावीसु य जाव अभिरममाणा आलीघरएसु य जाव विहरंति, तते णं ते मागंदियदारया तत्थवि सइं वा जाव अलभमाणा जेणेव उत्तरिल्ले वनसंडे तेणेव उवा० २ तत्थ णं वावीसु य जाव जालीघरएसु य विहरंति,*

*तते णं ते मागंदियदारया तत्थवि सतिं वा जाव अलभ० जेणेव पच्चत्थिमिल्ले वणसंडे तेणेव उवा० २ जाव विहरति,*

*तते णं ते मागंदिय० तत्थवि सतिं वा जाव अलभ० अन्नमन्नं एवं वदासी–एवं खलु देवा० ! अम्हे रयणदीवदेवया एवं वयासी–एवं खलु अहं देवाणुप्पिया ! सक्कस्स वयणसंदेसेणं सुट्ठिएण लवणाहिवइणा जाव मा णं तुब्भं सरीरगस्स वावत्ती भविस्सति तं भवियव्वं एत्थ कारणेणं, तं सेयं खलु अम्हं दक्खिणिल्लं वनसंडे तेणेव पहारेत्थ गमणाए,*

*तते णं गंधे निद्धाति से जहा नामए अहिमडेति वा जाव अनिट्ठतराए चेव, तते णं ते मागंदियदारया तेणं असुभेणं गंधेणं अभिभूया समाणा सएहिं २ उत्तरिज्जेहिं आसातिं पिहेंति २ जेणेव दक्खिणिल्ले वनसंडे तेणेव उवागया तत्थ णं महं एगं आघातणं पासंति २ अट्ठिय-रासिसतसंकुलं भीमदरिसणिज्जं एगं च तत्थ सूलाइतयं पुरिसं कलुणातिं विसरातिं कट्ठातिं कुव्वमाणं पासंति, भीता जाव संजातभया जेणेव से सूलातियपुरिसे तेणेव उवागच्छंति २ तं सूलाइयं एवं वदासी–एस णं दे० ! कस्साघयणे तुमं च णं के कओ वा इहं हव्वमागए केण वा इमेयारूवं आवतिं पाविए ?, तते णं से सूलातियए पुरिसे मागंदियदारए एवं वदासी–*

*एस णं देवाणु० ! रयणदीवदेवया आझयणे अहण्णं देवाणुप्पिया ! जंबुद्दीवाओ दीवाओ भारहाओ वासाओ कागंदीए आसवाणियए विपुलं पणियभंडमायाए पोतवहणेणं लवणसमुद्दं ओयाए, तते णं अहं पोयवहणविवत्तीए निब्बुड्डभंडसारे एगं फलगखंडं आसाएमि, तते णं अहं उवुज्झमाणे २ रयणदीवंतेणं संवूढे, तते णं सा रयणदीवदेवया ममं ओहिणा पासइ २ ममं गेण्हइ २ मए सद्धिं विपुलातिं भोगभोगातिं भुंजमाणी विहरति,*

*तते णं सा रयणदीवदेवया अन्नदा कयाई अहालहुसगंसि अवराहंसि परिकुविया समाणी ममं एतारूवं आवतिं पावेइ, तं न नज्जति णं देवा० ! तुम्हंपि इमेसिं सरीरगाणं का मन्ने आवती भविस्सइ ?, तते णं ते मागंदियदारया तस्स सूलाइयगस्स अंतिए एयमत्थं सोच्चा निसम्म बलियतरं भीया जाव संजायभया सूलाइतयं पुरिसं एवं व०–कहण्णं देवाणु० ! अम्हे रतणदीवदेवयाए हत्थाओ साहत्थिं नित्थरिज्जामो ?*

*तते णं से सूलाइयए पुरिसे ते मागंदिय० एवं वदासी–एस णं देवाणु० ! पुरच्छिमिल्ले वनसंडे सेलगस्स जक्खस्स जक्खाययणे सेलए नामं आसरूवधारी जक्खे परिवसति, तए णं से सेलए जक्खे चोद्दसट्ठमुद्दिट्ठपुण्णमासिणीसु आगयसमए पत्तसमये महया २ सद्देणं एवं वदति–कं तारयामि कं पालयामि ?, तं गच्छह णं तुब्भे देवा० ! पुरच्छिमिल्लं वनसंडं सेलगस्स जक्खस्स महरिहं पुप्फच्चणियं करेह २ जण्णुपायवडिया पंजलिउडा विणएणं पज्जुवासमाणा चिट्ठह,*

*जाहे णं से सेलए जक्खे आगतसमए पत्तसमए एवं वदेज्जा–कं तारयामि कं पालयामि?, ताहे तुब्भे वदह–अम्हे तारयाहि अम्हे पालयाहि, सेलए भे जक्खे परं रयणदीवदेवयाए हत्थाओ साहत्थिं नित्थारेज्जा, अन्नहा भे न याणामि इमेसिं सरीरगाणं का मन्ने आवई भविस्सइ ?*

**वृ.** 'सइं व'त्ति सुखलक्षणफलबहुलतां स्मृतिं वा स्मरणं अतिव्याकुलचित्ततया न लभते स्मरतिं–चित्तरमणं 'धिइं व'त्ति धृतिं चित्तस्वास्थ्यमिति, 'आसयाइं'ति आस्ये–मुखे 'पिहिंति'त्ति पिधन्तः–स्थगयन्तः 'आघयणं'ति वधस्थानं 'सूलाइयगं'ति शूलिकाभिन्नं 'कलुणाइं'ति करुणाजनकत्वात् 'कट्ठाइं'ति कष्टं–दुःखं तत्प्रभवत्वात् 'वसिसराइं'ति विरूपशब्दस्वरूपत्वात् वचनानीति गम्यते, 'कूजन्तं' अव्यक्तं शब्दायमानं 'कार्कदीए'त्ति काकन्दीनगरी तद्भवः, 'ओयाए'त्ति उपायातः–उपागतः, 'अहालहुस्सगंसि'त्ति यथाप्रकारे लघुस्वरूपे०, ।

**मू. (१२४)** *तते णं ते मागंदिय० तस्स सूलाइयस्स अंतिए एयमट्ठं सोच्चा निसम्म सिग्घं चंडं चवलं तुरियं चेइयं जेणेव पुरच्छिमिल्ले वनसंडे जेणेव पोक्खरिणी तेणेव उवा० पोक्खरिणिं गाहंति २ जलमज्जणं करेन्ति २ जाइं तत्थ उप्पलाइं जाव गेण्हंति २ जेणेव सेलगस्स जक्खस्स जक्खाययणे तेणेव उ० २ आलोए पणामं करेंति २ महरिहं पुप्फच्चणियं करेंति २ जण्णुपायवडिया सुस्सूसमाणा नमंसमाणा पज्जुवासंति,*

*तते णं से सेलए जक्खे आगतसमए पत्तसमए एवं वदासी–कं तारयामि कं पालयामि ?, तते णं ते मागंदियदारया उट्ठाए उट्ठेति करयल० एवं व०–अम्हे तारयाहि अम्हे पालयाहि, तए णं से सेलए जक्खे ते मागंदिय० एवं वया०–एवं खलु देवाणुप्पिया ! तुब्भं मए सद्धिं लवणसमुद्देणं मज्झं २ वीइवयमाणेणं सा रयणदीवदेवया पावा चंडा रुद्दा खुद्दा साहसिया बहूहिं खरएहि य मउएहि य अनुलोमेहि य पडिलोमेहि य सिंगारेहि य कलुणेहि य उवसग्गेहि य उवसग्गं करेहिति,*

*तं जति णं तुब्भे देवा० ! रयणदीवदेवयाए एतमट्ठं आढाह वा परियाणह वा अवयेक्खह वा तो भे अहं पिट्ठातो विधुणामि, अह णं तुब्भे रयणदीवदेवयाए एतमट्ठं नो आढाह नो परियाणह नो अवेक्खह तो भे रयणदीवदेवयाहत्थातो साहत्थिं नित्थारेमि,*

*तए णं ते मागंदियदारया सेलगं जक्खं एवं वदासी–जण्णं देवाणु० ! वइस्संति तस्स णं उववायवयणणिद्देसे चिट्ठिस्सामो, ततेणं से सेलए जक्खे उत्तरपुरच्छिमं दिसीभागं अवक्कमति २ वेउव्वियसमुग्घाएणं समोहणति २ संखेज्जातिं जोयणाइं दंडं निस्सरइ दोच्चंपि तच्चंपि वेउव्वियसमु० २ एगं महं आसरूवं विउव्वइ २ ते मागंदियदारए एवं वदासी–हं भो मागंदिया ! आरुह णं देवाणुप्पिया ! मम पिट्ठंसि, तते णं ते मागंदिय० हट्ठ० सेलगस्स जक्खस्स पणामं करेंति २ सेलगस्स पिट्ठिं दुरूढा, तते णं से सेलए ते मागंदिय० दुरूढे जाणित्ता सत्तट्ठतालप्पमाणमेत्ताति उड्ढं वेहासं उप्पयति, उप्पइत्ता य ताए उक्किट्ठाए तुरियाए देवयाए लवणसमुद्दं मज्झंमज्झेणं जेणेव जंबुद्दीवे दीवे जेणेव भारहे जेणेव चंपा नयरी तेणेव पहारेत्थ गमणाए ।*

**वृ.** 'उद्दिट्ठ'त्ति अमावास्या, 'आगयसमए'त्ति आसन्नीभूतोऽवसरो यस्य स इत्यर्थः, प्राप्तस्तु साक्षादेव, 'हत्थाओ'त्ति हस्ताद् ग्रहणप्रवृत्तात् 'साहत्थि'ति स्वहस्तेन 'सिंगारेहिं' ति शृङ्गाररसोपेतैः कामोत्कोचकैः करुणैस्तथैव उवसर्गैः–उपद्रवैर्वचनचेष्टाविशेषरूपैः 'अवयक्खह' अपेक्षध्वं 'मए सद्धिं हसियाणि'इत्यादि, इह क्तप्रत्ययो भावे तस्य चोपाधिभेदेन भेदस्य विवक्षणाद् बहुवचनं, अन्यथा युवाभ्यां मया सार्द्धं हसितं चेत्यादि वाच्यं स्यात्, तथा रमितानि च क्रीडादिभिः ललितानि च ईप्सितानि लीला वा 'कीलियाणि य'त्ति जलान्दोलनकक्रीडादिभिः हिण्डितानि च वनादिषु विहृतानि मोहितानि च–निधुवनानि, एतच्च वाक्यं काकाऽध्येयं, तत उपालम्भः प्रतीयते ।

**मू. (१२५)** *तते णं सा रयणदीवदेवया लवणसमुद्दं तिसत्तखुत्तो अनुपरियट्टति जं तत्थ तणं वा जाव एडेति, जेणेव पासायवडेंसए तेणेव उवागच्छति २ ते मागंदिया पासायवडिंसए अपासमाणी जेणेव पुरच्छिमिल्ले वनसंडे जाव सव्वतो समंता मग्गणगवेसणं करेति २ तेसिं मागंदियदारगाणं कच्छइ सुतिं वा ३ अलभमाणी जेणेव उत्तरिल्ले एवं चेव पच्चत्थिमिल्लेवि जाव अपासमाणी ओहिं पउंजति, ते मागंदियदारए सेलएणं सद्धिं लवणसमुद्दं मज्झंमज्झेणं वीइवयमाणे २ पासति २ आसुरुत्ता असिखेडगं गेण्हति २ सत्तट्ठ जाव उप्पयति २ ताए उक्किट्ठाए जेणेव मागंदिय० तेणेव उवा० २ एवं व०–हं भो मागंदिय० अप्पत्थियपत्थिया किण्णं तुब्भे जाणह ममं विप्पजहाय सेलएणं जक्खेणं सद्धिं लवणसमुद्दं मज्झंमज्झेणं वीतीवयमाणा ?,*

*तं एवमवि गए जइ णं तुब्भे ममं अवयक्खह तो भे अत्थि जीवियं, अहन्नं नावयक्खह तो भे इमेणं नीलुप्पलगवल जाव एडेमि, तते णं ते मागंदियदारया रयणदीवदेवयाए अंतिए एयमट्ठं सो० निस० अभीया अतत्था अणुव्विग्गा अक्खुभिया असंभंता रयणदीवदेवयाए एयमट्ठं नो आढंति नो परि० नो अवयक्खंति, अनाढायमाणा अपरि० अनवयक्खमाणा सेलएण जक्खेण सद्धिं लवणसमुद्दं मज्झंमज्झेणं वीतिवयंति,*

*तते णं सा रयणदीवदेवया ते मागंदिया जाहे नो संचाएति बहूहिं पडिलोमेहि य उवसग्गेहि य चालित्तए वा खोभित्तए वा विपरिणामित्तए वा लोभित्तए वा ताहे महुरेहि सिंगारेहि य कलुणेहि*

*य उवसग्गेहि य उवसग्गेउं पयत्ता यावि होत्था, हं भो मागंदियदारगा! जति णं तुब्भेहिं देवाणुप्पिया मए सद्धिं हसियाणि य रमियाणि य ललियाणि य कीलियाणि य हिंडियाणि य मोहियाणि य ताहे णं तुब्भे सव्वातिं अगणेमाणा ममं विप्पजहाय सेलएणं सद्धिं लवणसमुद्दं मज्झंमज्झेणं वीइवयह,*

*तते णं सा रयणदीवदेवया जिनरक्खियस्स मणं ओहिणा आभाएति आभोएत्ता एवं वदासी–निच्चंऽपिय णं अहं जिनपालियस्स अनिट्ठा ५ निच्चं मम जिनपालिए अनिट्ठे ५ निच्चंपिय णं अहं जिनरक्खियस्स इट्ठा ५ निच्चंपिय णं ममं जिणरक्खिए इट्ठे ५,*

*जति णं ममं जिनपालिए रोयमाणीं कंदमाणीं सोयमाणीं तिप्पमाणीं विलवमाणीं नावयक्खति किण्णं तुमं जिनरक्खिया! ममं रोयमाणिं जाव नावयक्खसि?, तते णं–*

**वृ.** 'तए णं सा रयणदीवे'त्यादि सूत्रं वाचनान्तरे रूपकविशेषद्वयभ्रान्तिं करोति, ।

**मू. (१२६)** *"सा पवररयणदीवस्स देवया ओहिणा उं जिनरक्खियस्स मनं ।*
*नाऊण वधनिमित्तं उवरि मागंदियदारगाणं दोण्हंपि ॥*

**वृ.** 'तथाहि–'सा पवररयणदीवस्स देवया ओहिणा उ जिनरक्खिअस्स नाऊण वहनिमित्तं उवरिं माइंदिदारगाण दोण्हंपि' इत्येकं 'दोसकलिया सलीलयं नाणाविहचुण्णवासमीसियं दिव्वं घाणमणनिव्वुइकरं सव्वोउयसुरहिकुसुमवुट्ठिकरं पमुंचमाणी' इति द्वितीयं, एवमन्यान्यपि परिभावनीयानि पद्यानि, पद्यबन्धं हि विना तुकारादिनिपातानां पादपूरणार्थानां निर्देशो न घटते, अपरिमितानि च छन्दःशास्त्राणीति, अर्थस्त्वेवम्–सा देवता जिनरक्षितस्य ज्ञात्वा भावमिति शेषो वधनिमित्तं तस्यैव, वचनमिदं ब्रवीति स्मेति सम्बन्धः, ।

**मू. (१२७)** *दोसकलिया सललियं नानाविहचुण्णवासमीसं (सियं) दिव्वं ।*
*घाणमणनिव्वुइकरं सव्वोउयसुरभिकुसुमवुट्ठिं पमुंचमाणी ॥*

**वृ.** 'दोसकलिय'त्ति द्वेषयुक्ता, 'सलीलयं'ति सलीलं यथा भवतीत्यर्थः, 'चुण्णवास'त्ति चूर्णलक्षणा वासाः चूर्णवासाः तर्मिश्रा या सा तथा तां दिव्यां घ्राणमनोनिर्वृत्तिकारीं सर्वर्तुकानां सुरभीणां च कुसुमानां या वृष्टिः सा तथा तां प्रमुञ्चन्ती ।

**मू. (१२८)** *नानामणिकणगरयणघंटियखिंखिणिणेऊरमेहलभूसणरवेणं ।*
*दिसाओ विदिसाओ पूरयंती वयणमिणं बेति सा सकलुसा ॥*

**वृ.** तथा नानामणिकनकरत्नानां सम्बन्धीनि घण्टिकाश्च किङ्किण्यश्च–क्षुद्रघण्टिका नुपूरौ च प्रतीतौ मेखला च–रसना एतल्लक्षणानि यानि भूषणानि तेषां यो रवस्तेन इति रूपकार्धं 'दिसाओ विदिसाओ पूरयंति वयणमिणं बेइ य'त्ति दिशो विदिशश्च पूरयन्ती वचनमिदं वक्ष्यमाणं ब्रवीति सा देवता, 'सकलुस'त्ति सह कलुषेण पापेन वर्त्तते या सा तथेति तृतीयं ।

**मू. (१२९)** *होल वसुल गोल नाह दइत पिय रमण कंत सामिय निग्घिण नित्थक्क ।*
*छिन्न निक्किव अकयलुय सिढिल भाव निल्लज्ज लुक्ख*
*अकलुण जिनरक्खिय मज्झं हिययरक्खगा! ॥*

**वृ.** हे हो (हा) ल हे वसुल हे गोल एतानि च पदानि नानादेशापेक्षया पुरुषाद्यामन्त्रणवचनानि गौरवकुत्सादिगर्भाणि वर्त्तन्ते, हो(हा)ल इति दशवैकालिके होल इति दृश्यते, तथा नाथ!–

–योगक्षेमकरिन्! दयित!–वल्लभ! रक्षित! इति वा प्रिय!–प्रेमकर्त्तः! रमण–भर्त्तः! कान्त!–कमनीय! स्वामिक!–अधिपते! निर्घृण!–निर्दय! सस्नेहाया वियोगदुःस्थाया मम परित्यागात् 'नित्थक' त्ति अनवसरज्ञ अनुरक्ताया ममाकाण्डे एव त्यागादित्यर्द्धं।

'छिन्न'त्ति स्त्यान! कठिन मदीयात्यन्तानुकूलचरिताद्रवीकृतहृदयत्वात् निष्कृप! मम दुःखिताया अप्रतीकारात्, अकृतज्ञ! मदीयोपकारस्यानपेक्षणात् शिथिलभाव! अकस्माद् मम मोचनात् निर्लज्ज! प्रतिपन्नत्यागात् रूक्ष! स्नेहकार्याकरणात् अकरुण! हे जिनरक्षित मम हृदयरक्षक!–वियोगदुःखेन शतधास्फुटतो हृदयस्य त्रायक पुनर्मम स्वीकरणात इत्यर्थः इति चतुर्थं।

मू. (१३०) नहु जुज्जसि एक्कियं अनाहं अबंधवं तुज्झ
चलणओवायकारियं उज्झिउं महण्णं।
अहं तुमे विहूणा न समत्थावि जीविउं खणंपि॥

वृ. 'नहु' नैव युज्यसे–अर्हसि एककामनाथामबान्धवां तव चलनोपपातकारिकां–पादसेवाविधायिनीमुज्झितुमधन्यामिति, इह च समानार्थनेकशब्दोपादानेऽपि न पुनरुक्तदोषः सम्भ्रमाभिहितत्वात्, यदाह–

॥१॥ "वक्ता हर्षभयादिभिराक्षिप्तमनाः स्तुवंस्तथा निन्दन्।
यत्पदमसकृद् ब्रूयात् तत्पुनरुक्तं न दोषाय॥"

इति अर्धं, हे गुणसंकर!–गुणसमुदायरूप! हं इति अकारलोपदर्शनादहमिति धश्यं त्वयाविहीना न समर्था जीवितुं क्षणमपीति पञ्चमं।

मू. (१३१) इमस्स उ अनेगझसमगरविविधसावयसयाउलघरस्स।
रयणागरस्स मज्झे अप्पाणं वहेमि तुज्झ पुरओ एहि
नियत्ताहि जइसि कुविओ खमाहि एक्कावराहं मे॥

वृ. तथा 'इमस्स उ' त्ति अस्य पुनः अनेके ये झषा–मत्स्या मकरा–ग्राहाः विविधश्वापदाश्च–जलचरक्षुद्रसत्त्वरूपास्तेषां यानि शतानि तेषामाकुलगृहं आकीर्णगेहं झषादीनां वा सदा–नित्यं कुलगृहमिव कुलगृहं यः स तथा तस्येत्यर्द्धं, रत्नाकरस्य–समुद्रस्य मध्ये आत्मानं 'वहेमि' त्ति हन्मि तव–भवतः पुरतः–अग्रतः तथा एहि निवर्तस्व 'जइसि' त्ति यदि भवसि कुपितः क्षमस्वैकापराधं त्वं मे इति षष्ठं।

मू. (१३२) तुज्झ य विगयघणविमलससिमंडलगारसस्सिरीयं
सारयनवकमलकुमुदकुवलयविमलदलनिकरसरिसनिभं।
नयणं वयणं पिवासागयाए सद्धा मे पेच्छिउं जे
अवलोएहि ता इओ ममं नाह जा ते पेच्छामि वयणकमलं॥

वृ. 'तुज्झ य' त्ति तव च विगधनं विमलं च यच्छशिमण्डलं तस्येवाकारो यस्य श्रिया च सह यद्वर्त्तते तत्तथा, पाठान्तरेण विगतघनविमलशशिमण्डलेनोपमा यस्य सश्रीकं च यत्तत्तथा, शारदं–शरत्कालसम्भवं यन्नवं–प्रत्यग्रं कमलं च–सूर्यबोध्यं कुमुदं च–चन्द्रबोध्यं कुवलयं च–नीलोत्पलं तेषां यो दलनिकरः–दलवृन्दं तत्सदृशे नितरां भात इति–निभे च नयने यत्र तत्तथा, पाठान्तरेण शारदनवकमलकुमुदे च ते विमुकुले च ते विकसिते शेषं तथैव,

–वदनं–मुखं प्रतीति वाक्यशेषः, पिपासागतायाः–मुखदर्शनजलपानेच्छया आयातायाः तां वा गतायाः–प्राप्तायाः कस्याः ?–मे–मम श्रद्धा–अभिलाषः किं कर्तुं ?–प्रेक्षितुं–अवलोकयितुं जे इति पादपूरणे निपातः अवलोकय ता इति–ततस्तावदिति वा इतः–अस्यां दिशि मां नाथ जा इति–येन यावदिति वा ते–तव प्रेक्षे वदनकमलमिति रूपकं।

**मू. (१३३)** *एवं सप्पणयसरलमहुराति पुणो २ कलुणाइं वयणाति*
*जंपमाणी सा पावा मग्गओ समण्णेइ पावहियया ॥*

**वृ.** एवं सप्रणयानि–स्नेहानीव सरलानि–सुखावगम्याभिधेयानि मधुराणि च–भाषया कोमलानि यानि तानि तथा, तथा करुणानि–करुणोत्पादकत्वात् वचनानि जल्पन्ती सा पापा क्रियया मार्गतः–पृष्ठतः समन्वेति–समनुगच्छति पापहृदयेति।

**मू. (१३४)** *तते णं से जिनरक्खिए चलमणे तेणेव भूसणरवेणं कण्णसुहमणोहरेणं तेहि य सप्पणयसरलमहुरभणिएहिं संजायविउणराए रयणदीवस्स देवयाए तीसे सुंदरथण-जहणवयणकरचरणनयणलावन्नरूवजोव्वणसिरिं च दिव्वं सरभसउवगूहियाइं जातिं विब्बोय-विलसियाणि य विहसियसकडक्खदिट्ठिनिस्ससियमलियउवललियठियगमण- पणयखिज्जियपासा दियाणि य सरमाणे रागमोहियमई अवसे कम्मवसगए अवयक्खति मग्गतो सविलियं, तते णं जिणरक्खियं समुप्पन्नकलुणभावं मच्चुगलत्थल्लणोल्लियमइं अवयक्खंतं तहेव जक्खे य सेलए जाणिऊण सणियं २ उव्विहति नियगपिट्ठाहि विगयसत्तं, तते णं सा रयणदीवदेवया निस्संसा कलुणं जिनरक्खियं सकलुसा सेलगपिट्ठाहि उवयंतं दास ! मओसित्ति जंपमाणी अप्पत्तं सागरसलिलं गेण्हय बाहाहिं आरसंतं उड्ढं उव्विहति, अंबरतले ओवयमाणं च मंडलग्गेण पडिच्छित्ता नीलुप्पलग-वलअयसिप्पगासेण असिवरेणं खंडाखंडिं करेत २ तत्थ विलवमाणं तस्स य सरसवहियस्स घेत्तूण अंगमंगातिं सरुहिराइं उक्खित्तबलिं चउद्दिसिं करेति सा पंजली पहिट्ठा।*

**वृ.** ततोऽसौ जिनरक्षितश्चलमनाः–अभ्युपगमाच्चलितचेताः 'अवयक्खइ'त्ति सम्बन्धः, किंभूतः ?–सञ्जातद्विगुणरागः पूर्वकालापेक्षया, कस्यां ?–रत्नद्वीपदेवतायां, केन कैश्चेत्याह–तेन च–पूर्वोक्तेन भूषणरवेण कर्णसुखो मनोहरश्च यस्तेन तैश्च पूर्ववर्णितैः सप्रणयसरलमधुरभणितैः, तथा तस्या देवतायाः सुन्दरं यत्स्तनजघनवदनकरचरणनयनानां लावण्यं–स्पृहणीयत्वं तच्च रूपं च–शरीरसुन्दरत्वं च यौवनं च–तारुण्यं तेषां या श्रीः–सम्पत् सा तथा तां च दिव्यां–देवसम्बन्धिनीं स्मरन्निति सम्बन्धः, तथा सरभसानि–सहर्षाणि यान्युपगूहितानि–आलिङ्गितानि तानि तथा–

'विब्बोयकाः' स्त्रीचेष्टाविशेषाः विलसितानि च–नेत्रविकारलक्षणानि च तानि तथा, विहसितानि च–अर्द्धसितादीनि सकटाक्षाः–सापाङ्गदर्शनाः दृष्टयो–विलोकितानि निःश्वसितानि च–कामक्रीडायाः समुद्भवानि मलितानि च–पुरुषाभिलषणीययोषिदङ्गमर्दनानि च पाठान्तरेण मणितानि च– रतकूजितानि उपललितानि च–क्रीडितविशेषरूपाणि पाठान्तरेण ललितानि–ईप्सितानि क्रीडितानि वा स्थितानि च–स्वभवनेषु उत्सङ्गासनादिषु वा अवस्थानानि गमनानि च–हंसगत्या चङ्क्रमणानि प्रणयखेदितानि च–प्रणयरोषणानि प्रसादितानि च–कोपप्रसादनानीति द्वन्द्वस्तानि च स्मरन्–चिन्तयन्।

रागमोहितमतिः अवश आत्मन इति गम्यते, कर्म्मवशं–कर्मणः पारातन्त्र्यं गतो यः स

तथा पाठान्तरे कर्म्मवशात् वेगेन मोहस्य नडितो–विडम्बितो यः स कर्म्मवशवेगनडितः, 'अवइ-क्खइ' त्ति अवेक्षते–निरीक्षते स्म मार्गतः–पृष्ठतोऽवलोकयति तामागच्छन्तीमित्यर्थः, 'सविलियं' ति सव्रीडं, सलज्जमित्यर्थः। 'मच्चुगलत्थल्लणोल्लियमइं' ति मृत्युना–यमराक्षसेन 'गलत्थल्ल' हस्तेन गलग्रहणरूपा तया नोदिता–स्वदेशगमनवैमुख्येन यमपुरीगमनाभिमुखीकृता मतिर्यस्य स तथा तं अवेक्खमाणं तथैव यक्षस्तु शैलको ज्ञात्वा शनैः २ 'उव्विहइ' त्ति उद्विजहाति–ऊर्द्ध्वं क्षिपति, 'तहेव सणियं' इत्येतत् पदद्वयं वाचनान्तरे नोपलभ्यते निजकपृष्ठात् शरीरावयवविशेषात् 'विगयसत्थं' ति विगतस्वास्थ्यं पाठान्तरे विगतश्रद्धो यक्षः शैलक इति,

'ओवयंतं' ति अवपतन्तं 'सरसवहियस्स' त्ति सरसं–अभिमानरसोपेतं वधितोहतो यः स तथा तस्य 'अंगमंगाइं' ति शरीरावयवान् 'उक्खित्तबलिं' ति उक्षिप्तः–ऊर्द्ध्व आकाशे क्षिप्तो न भूमिपट्टादिषु निवेशितो यो बलिः–देवतानामवपहारः स तथा तं चतुर्दिशं करोति, सा देवता 'पंजलि' त्ति प्रकृताञ्जलिः प्रकृष्टतोषवती।

**मू. (१३५)** *एवामेव समणाउसो ! जो अम्हं निग्गंथाण वा २ अंतिए पव्वतिए समाणे पुनरवि माणुस्सए कामभोगे आसायति पत्थयति पीहेति अभिलसति से णं इह भवे चेव बहूणं समणाणं ४ जाव संसारं अणुपरियट्टिस्सति, जहा वा से जिनरक्खिए–*

**वृ.** 'एवमेवे' त्यादि निगमनं 'आसाय' त्ति प्राप्तानाश्रयति भजते–अप्राप्तान् प्रार्थयतेऽद्धिमन्तं याचते स्पृहयति–अप्रार्थित एव यद्ययं श्रीमान् भोगान् मे ददाति तदा साधु भवति इत्येवंरूपां स्पृहां करोति अभिलषति–दृष्टादृष्टेषु शब्दादिषु भोगेच्छां करोतीत्यर्थः।

**मू. (१३६)** *"छलओ अवयक्खंतो निरावयक्खो गओ अविग्घेणं।*
*तम्हा पवयणसारे निरावयक्खेण भवियव्वं॥*

**वृ.** अत्रार्थे 'छलिउं' गाहा–छलितो–व्यंसितोऽनर्थं प्राप्तः 'अवकाङ्क्षन्' पश्चाद्भागमव-लोकयन् जिनरक्षित इति प्रस्तुतमेव 'निरवयवखो' निरवकाङ्क्षः पश्चाद्भागमनवेक्षमाणस्तन्निस्पृह इत्यर्थो गतः–स्वस्थानं प्राप्तोऽविघ्नेन–अन्तरायभावेन जिनपालित इति वक्ष्यमाणं, एष दृष्टान्तानुवादो, दार्ष्टान्तिकस्त्वेवं–यस्मादेवं तस्मात् 'प्रवचनासारे' चारित्रे लब्धे सतीति गम्यते 'निरवकाङ्क्षेण' परित्यक्तभोगान् प्रति निरपेक्षेण–अनभिलाषवता भवितव्यमिति।

**मू. (१३७)** *भोगे अवयक्खंता पडंति संसारसायरे घोरे।*
*भोगेहिं निरवयक्खा तरंति संसारकंतारं॥"*

**वृ.** 'भोगे' गाहा चारित्रं प्रतिपद्यापि भोगानवकाङ्क्षन्तः पतन्ति संसारसागरे घोरे जिनर-क्षितवत्, इतरे तु तरन्ति जिनपालितवत् समुद्रमिति॥

इह विशेषोपनयमेवं वर्णयन्ति व्याख्यातारः–

॥१॥ "जह रयणदीवदेवी तह एत्थं अविरई महापावा।
जह लाहत्थी विणिया तह सुहकामा इहं जीवा॥

॥२॥ जह तेहिं भीएहिं दिट्ठो आघायमंडले पुरिसो।
संसारदुक्खभीया पासंति तहेव धम्मकहं॥

॥३॥ जह तेण तेसि कहिया देवी दुक्खाण कारणं घोरं।

तत्तो च्चिय नित्थारो सेलगजक्खाओ नन्नत्तो ॥

॥ ४ ॥ तह धम्मकही भव्वाण साहए दिट्ठअविरइसहावो ।
सयलदुहहेउभूओ विसया विरयंति जीवाणं ॥

॥ ५ ॥ सत्ताणं दुहत्ताणं सरणं चरणं जिणिंदपन्नत्तं ।
आनंदरूवनिव्वाणसाहणं तहय देसेइ ॥

॥ ६ ॥ जह तेसिं तरियव्वो रुद्दसमुद्दो तहेव संसारो ।
जह तेसि सगिहगमणं निव्वाणगमो तहा एत्थं ॥

॥ ७ ॥ जह सेलगपिट्ठाओ भट्ठो देवीइ मोहियमईओ ।
सावयसहस्सपउरंमि सायरे पाविओ निहणं ॥

॥ ८ ॥ तह अविरईइ नडिओ चरणचुओ दुक्खसावयाइण्णे ।
निवडइ उपारसंसारसायरे दारुणसरुवे ॥

॥ ९ ॥ जह देवी अक्खोहो पत्तो सट्ठाण जीवियसुहाइं ।
तह चरणट्ठिओ साहू अक्खओहो जाइ निव्वाणं ॥

**मू. (१३८)** *तते णं सा रयणदीवदेवया जेणेव जिणपालिए तेणेव उवा० बहूहिं अणुलोमेहि य पडिलोमेहि य खरमहुरसिंगारेहिं कलुणेहि य उवसग्गेहि य जाहे नो संचाएइ चालित्तए वा खोभि० विप्प० ताहे संता तंता परितंता निव्विण्णा समाणा जामेव दिसिं पाउ० तामेव दिसं पडिगया, तते णं से सेलए जक्खे जिनपालिएण सद्धिं लवणसमुद्दं मज्झंमज्झेणं वीतियवति २ जेणेव चंपानयरी तेणेव उवागच्छति २ चंपाए नयरीए अग्गुज्जाणंसि जिनपालियं पट्ठातो ओयारेति २ एवं वं०—एस णं देवा० ! चंपानयरी दीसतित्तिकट्टु जिनपालियं आपुच्छति २ जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगए ।*

**मू. (१३९)** *तते णं जिनपालिए चंपं अनुपविसति २ जेणेव सए गिहे जेणेव अम्मापियरो तेणेव उवागच्छइ २ अम्मापिऊणं रोयमाणे जाव विलवमाणे जिनरक्खियवावत्तिं निवेदेति, तते णं जिनपालिए अम्मापियरो मित्तनाति जाव परियणेणं सद्धिं रोयमाणातिं बहूइं लोइयाइं मयकिच्चाइं करेति २ कालेणं विगतसोया जाया, तते णं जिणपालियं अन्नया कयाइ सुहासणवरगतं अम्मापियरो एवं वदासी—कहण्णं पुत्ता ! जिनरक्खिए कालगए ?, तते णं से जिणपालिए अम्मापिऊणं लवणस-मुद्दोत्तारं च कालिय- वायसमुत्थणं पोतवहणविवत्तिं च फलहखंडआसातणं च रयणदीवुत्तारं च रयणदीवदेवयागिहं च भोगविभूइं च रयणदीवदेवयाअप्पाहणं च सूलाइयपुरिसदरिसणं च सेलगजक्खआरुहणं च रयणदीवदेवयाउवसग्गं च जिनरक्खयविवत्तिं च लवणसमुद्दउत्तरणं च चंपागमणं च सेलगज- क्खआपुच्छणं च जहाभूयमवितहमसंदिद्धं परिकहेति,*

*तते णं जिनपालिए जाव अप्पसोगे जाव विपुलातिं भोगभोगाइं भुंजमाणे विहरति ।*

**मू. (१४०)** *तेणं कालेणं २ समणे० समोसढे, धम्मं सोच्चा पव्वतिए एक्कारसंगवी मासिएणं सोहम्मे कप्पे दो सागरोवमे, महाविदेहे सिज्झिहिति । एवामेव समणाउसो ! जाव माणुस्सए कामभोए नो पुणरवि आसाति से णं जाव वीतिवतिस्सति जहा वा से जिनपालिए । एवं खलु जंबू*

*समणेणं भगवया नवमस्स नायज्झयणस्स अयमट्ठे पन्नत्तेतिबेमि ॥*

अध्ययनं – ९ – समाप्तम्

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता ज्ञाताधर्मकथाङ्ग सूत्रे**
**प्रथम श्रुतस्कन्धे नवम अध्ययनस्य अभयदेवसूरि विरचिता टीका परिसमाप्ता ।**

## अध्ययनं – १० – चन्द्रमा

**वृ.** अथ दशमं विव्रियते, तस्य चायं पूर्वेण सह सम्बन्धः—अनन्तराध्ययनेऽविरति-वशवर्त्यवशवर्त्तिनोरनर्थेतरावुक्तौ, इह तु गुणहानिवृद्धिलक्षणावनर्थार्थौ प्रमाद्यप्रमादिनोरभिधीयेते इत्येवंसम्बद्धमिदम्—

***मू. (१४१)*** *जति णं भंते ! समणेण० नवमस्स नायज्झयणस्स अयमट्ठे पन्नत्ते दसमस्स के अट्ठे० ?, एवं खलु जंबू ? तेणं कालेणं २ रायगिहे नगरे सामी समोसढे गोयमसामी एवं वदासी—कहन्नं भंते ! जीवा वड्ढंति वा हायन्ति वा ?, गो० ! से जहा नामए बहुलपक्खस्स पाडिवयाचंदे पुन्निमाचंदं पणिहाय हीणो वण्णेणं हीणे सोम्मयाए हीणे निद्धयाए हीणे कंतीए एवं दित्तीए जुत्तीए छायाए पभाए ओयाए लेस्साए मंडलेणं तयानंतरं च णं बीयाचंदे पाडिवयं चंदं पणिहाय हीनतराए वण्णेणं जाव मंडलेणं तयानतरं च णं ततिआचंदे बितियाचंदं पणिहाय हीनतराए वण्णेणं जाव मंडलेणं, एवं खलु एएणं कमेणं परिहायमाणे-२ जाव अमावास्या चंदे चाउद्दसि चंदं पणिहाय नट्ठे वण्णेणं जाव नट्ठे मंडलेणं, एवामेव समणाउसो ! जो अम्हं निग्गंथो वा निग्गंथी वा जाव पव्वइए समाणे हीणे खंतीए एवं मुत्तीए गुत्तीए अज्जवेणं मद्दवेणं लाघवेणं सच्चेणं तवेणं चियाए अकिंचणयाए बंभचेरवासेणं,*

*तयानंतरं च णं हीने हीनतराए खंतीए जाव हीणतराए बंभचेरवासेणं, एवं खलु एएणं कमेणं परिहायमाणे २ नट्ठे खंतीए जाव नट्ठे बंभचेरवासेणं, से जहा वा सुक्कपक्खस्स पाडिवायचंदे अमावासाए चंदं पणिहाय अहिए वण्णेणं जाव अहिए मंडलेणं तयाणंतरं च णं बिइयाचंदे पडिवयाचंदं पणिहाय अहिययराए वण्णेणं जाव अहियतराए मंडलेणं एवं खलु एएणं कमेणं परिवुड्ढेमाणे २ जाव पुण्णिमाचंदे चाउद्दसिं चंदं पणिहाय पडिपुण्णं वण्णेणं जाव पडिपुन्ने मंडलेणं,*

*एवामेव समणाउसो ! जाव पव्वतिए समाणे अहिए खंतीए जाव बंभचेरवासेणं, तयानंतरं च णं अहिययराए खंतीए जाव बंभचेरवासेणं, एवं खलु एएणं कमेणं परिवड्ढे माणे २ जाव पडिपुन्ने बंभचेरवासेणं, एवं खलु जीवा वड्ढंति वा हायंति वा, एवं खलु जंबू ! समणेणं भगवता महावीरेणं दसमस्स नायज्झयणस्स अयमट्ठे पन्नत्तेतिबेमि ॥*

**वृ.** सर्वं सुगमम्, नवरं जीवानां द्रव्यतोऽनन्तत्वेन प्रदेशतश्च प्रत्येकमसङ्ख्यात-प्रदेशत्वेनावस्थितपरिमाणत्वात् वर्द्धन्ते गुणैः हीयन्ते च तैरेव । अनन्तरनिर्देशत्वेन हानिमेव तावदाह—'से जहे'त्यादि, 'पणिहाए'त्ति प्रणिधायापेक्ष्य 'वर्णेन' शुक्लतालक्षणेन 'सौम्यतया' सुखदर्शनीयतया 'स्निग्धतया' अरुक्षतया 'कान्त्या' कमनीयतया 'दीप्तया' दीपनेन वस्तुप्रकाश-नेनत्यर्थः 'जुत्तीय'त्ति युक्तत्या आकाशसंयोगेन, ।

खण्डेन हि मण्डलेनाल्पतरमाकाशं युज्यते न पुनर्यावत्सम्पूर्णेन, 'छायाया' जलादौ

प्रतिबिम्बलक्षणया शोभया वा 'प्रभया' उद्गमनसमये यद् द्युतिस्फुरणं तया 'ओयाए' त्ति ओजसा दाहापनय नादिस्वकार्यकरणशक्त्या 'लेश्यया' किरणरूपया 'मण्डलेन' वृत्ततया, क्षान्त्यादि-गुणहानिश्च कुशीलसंसर्गात् सद्गुरूणाम पर्युपासनात् प्रतिदिनं प्रमादपदासेवनात् तथाविध-चारित्रावरणकर्मोदयाच्च भवतीति, गुणवृद्धिस्त्वेतद्विपर्यायादिति, एवं च हीयमानानां जीवानां न वाञ्छितस्य निर्वाणसुखस्यावाप्तिरित्यनर्थः, आह च–

||१|| "चंदोव्व कालपक्खे परिहाई पए पए पमायपरो।
तह उग्घरविग्घरनिरंगणोवि न य इच्छियं लहइ ॥" त्ति

गुणैर्वर्द्धमानानां तु वाञ्छितार्थावाप्तेर्थ इति, विशेषयोजना पुनरेवम्–

||१|| "जह चंदो तह साहू राहुवरोहो जहा तह पमाओ।
वण्णाई गुणगणो जह तहा खमाई समणधम्मो ॥

||२|| पुण्णोवि पइदिनं जह हायंतो सव्वहा ससी नस्से।
तह पुण्णचरित्तोऽविहु कुसीलसंसग्गिमाईहिं ॥

||३|| जणियपमाओ साहू हायंतो पइदिणं खमाईहिं।
जायइ नट्ठचरित्तो तत्तो दुक्खाइं पावेइ ॥

||४|| (तथा) – 'हीणगुणोविहु होउं सुहगुरुजोगाइजणियसंवेगो।
पुण्णसरूवो जाइय विवड्ढमाणो ससहरोव्व ॥

श्रुतस्कन्धः : १ – अध्ययनं – १० – समाप्तम्

## अध्ययनं – ११ – दावद्रवः

वृ. अथैकादशमं विव्रियते–अस्य पूर्वेण सहायं सम्बन्धः–पूर्वत्र च प्रमादाप्रमादिनोर्गुण-हानिवृद्धिलक्षणावनर्थार्थावुक्ती, इह तु मार्गाराधनविराधनाभ्यां तावुच्येते इतिसम्बद्धमिदम्–

मू. (१४२) *जति णं भंते! दसमस्स नायज्झणस्स अयमट्ठे एक्कारसमस्स के अट्ठे०?, एवं खलु जंबू! तेणं कालेणं २ रायगिहे गोयमे एवं वदासी–कह णं भंते! जीवा आराहगा वा विराहगा वा भवंति?, गो०! से जहा नामए एगंसि समुदकूलंसि दावद्दवा नामं रुक्खा पन्नत्ता किण्हा जाव निउरुंबभूया पत्तिया पुप्फिया फलिया हरियगरेरिज्जमाणा सिरीए अतीव उवसोभेमाणा २ चिट्ठंति, जया णं दीविच्चगा ईसिं पुरेवाया पच्छावाया मंदावाया महावाया वायंति तदा णं बहवे दावद्दवा रुक्खा पत्तिया जाव चिट्ठंति अप्पेगतिया दावद्दवा रुक्खा जुन्ना झोडा परिसडियपंडुपत्तपुप्फफला सुक्करुक्खओ विव मिलायमाणा २ चिट्ठंति, ।*

*एवमामेव समणाउसो! जे अम्हं निग्गंथो वा निग्गंथी वा जाव पव्वतिते समाणे बहूणं समणाणं ४ सम्मं सहति जाव अहियासेति बहूणं अन्नउत्थियाणं बहूणं गिहत्थाणं नो सम्मं सहति जाव नो अहियासेति एस णं मए पुरिसे देसविराहए पन्नत्ते समणाउसो!। जया णं सामुद्दगा ईसिं पुरेवाया पच्छावाया मंदवाया महावाता वायंति तदा णं बहवे दावद्दवा रुक्खा जुण्णा झोडा जाव मिलायमाणा २ चिट्ठंति, अप्पेगइया दावद्दवा रुक्खा पत्तिया पुप्फिया जाव उवसोभेमाणा २ चिट्ठंति, एवामेव समणाउसो! जो अम्हं निग्गंथो वा निग्गंथी वा पव्वतिए समाणे बहूणं अन्नउत्थियाणं*

*बहूणं गिहत्थाणं सम्मं सहति बहूणं समणाणं ४ नो सम्मं सहति एस णं मए पुरिसे देसाराहए पन्नत्ते समणाउसो ! !*

*जया णं नो दीविच्चगा नो सामुद्दगा ईसिं पुरेवाया पच्छावाया जाव महावाया तते णं सव्वे दावद्दवा रुक्खा जुण्णा झोडा० एवामेव समणाउसो ! जाव पव्वतिए समाणे बहूणं समणाणं २ बहूणं अन्नउत्थियगिहत्थाणं नो सम्मं सहति एस णं मए पुरिसे सव्वविराहए पन्नत्ते समणाउसो!,*

*जया णं दीविच्चगावि सामुद्दगावि ईसिं पुरेवाया पच्छावाया जाव वायंति तदा णं सव्वे दावद्दवा रुक्खा पत्तिया जाव चिट्ठंति, एवामेव समणाउसो ! जे अम्हं पव्वतिए समाणे बहूणं समणाणं बहूणं अन्नउत्थियगिहत्थाणं सम्मं सहति एस णं मए पुरिसे सव्वाराए प० !, एवं खलु गो० ! जीवा आराहगा वा विराहगा वा भवंति, एवं खलु जंबू ! समणेणं भगवया एक्कारसमस्स अयमट्ठे पन्नत्तेत्तिबेमि !!*

**वृ.** सर्वं सुगमं, नवरं आराधका ज्ञानादिमोक्षमार्गस्य विराधका अपि तस्यैव 'जया ण'मित्यादि 'दीविच्चगा' द्वैप्या द्वीपसम्भवा ईषत् पुरोवाताः—मनाक्—सस्नेहवाता इत्यर्थः,- पूर्वदिक्सम्बन्धिनो वा, पथ्या वाता—वनस्पतीनां सामान्येन हिता वायवः पश्चाद्वाता वा मन्दाः—शनैः सञ्चारिणः महावाताः—उद्दंडवाता वान्ति तदा 'अप्पेगइय'त्ति अप्येके केचनापि स्तोका इत्यर्थः, 'जुण्ण'त्ति जीर्णा इव जीर्णाः, झोडः—पत्रादिशाटनं, तद्योगात्तेऽपि झोडाः, अत एव परिशटितानि कानिचिच्च पाण्डूनि पत्राणि पुष्पफलानि च येषां ते तथा शुष्कवृक्षक इव म्लायन्तस्तिष्ठन्ति इत्येष दृष्टान्तो, योजना त्वस्यैवं 'एवामेवे'त्यादि,

अन्नउत्थियाणं'ति अन्ययूथिकानां—तीर्थान्तरीयाणां कापिलादीनामित्यर्थः, दुर्वचनादीनुपसर्गान् नो सम्यक् सहते इति, 'एस णं'ति य एवंभूतः एष पुरुषो देशविराधको ज्ञानादिमोक्षमार्गस्य, इयमत्र विकल्पचतुष्टयेऽपि भावना—यथा दावद्रव्यवृक्षसमूहः स्वभावतो द्वीपवायुभिः बहुतरदेशैः स्वसम्पदः समृद्धिमनुभवति देशेन चासमृद्धिं १ समुद्रवायुभिश्च देशैरसमृद्धिं देशेन च समृद्धिं २ मुभयेषां च वायूनामभावे समृध्यभाव ३ मुभयसद्भावे च सर्वतः समृद्धिं ४ मेवं क्रमेण साधुः कुतीर्थिकगृहस्थानां दुर्वचनादीन्यसहमानः क्षान्तिप्रधानस्य ज्ञानादिमोक्षमार्गस्य देशतो विराधनां करोति, श्रमणादीनां बहुमानविषयाणां दुर्वचनादिक्षमणेन बहुतरदेशानामाराधनात् १ श्रमणादिदुर्वचनानां त्वसहने कुतीर्थिकादीनां सहने देशानां विराधनेन देशत एवाराधनां करोति २ उभयेषामसहमानो विराधनायां सर्वथा तस्य वर्त्तते ३ सहमानश्च सर्वथाऽऽराधनायामिति ४, इह पुनर्विशेषयोजनामेवं वर्णयन्ति—

॥ १ ॥ "जह दावद्दवतरुवणमेवं साहू जहेव दीविच्चा ।
वाया तह समणाइयसपक्खवयणाइं दुसहाइं ॥

॥ २ ॥ जह सामुद्दयवाया तहऽन्नतित्थाइकडुयवयणाइं ।
कुसुमाइसंपया जग सिवमग्गाराहणा तह उ ॥

॥ ३ ॥ जह कुसुमाइविणासो सिवमग्गविराहणा तहा नेया ।
जह दीववाउजोगे बहु इड्ढी ईसि य अणिड्ढी ॥

॥ ४ ॥ तहसाहम्मियवयणाण सहमाणाराहणा भवे बहुया ।

इयराणमसहणे पुण सिवमग्गविराहणा थोवा ॥
॥ ५ ॥ जह जलहि वाउजोगे थेविड्डी बहुयरा यऽणिड्डी य ।
तह परपक्खक्खमणे आराहणमीसि बहुययरं ॥
॥ ६ ॥ जह उभयवाउविरहे सव्वा तरुसंपया विणट्ठत्ति ।
अनिमित्तोभयमच्छररुवे विराहणा तह य ॥
॥ ७ ॥ जह उभयवाउजोगे सव्वसमिद्धी वनस्स संजाया ।
तह उभयवयणसहणे सिवमग्गाराहणा वुत्ता ॥
॥ ८ ॥ ता पुन्नसमणधम्माराहणचित्तो सया महासत्तो ।
सव्वेणवि कीरंतं सहेज्ज सव्वंपि पडिकूलं ॥"

श्रुतस्कन्धः १, अध्ययनं – ११ – समाप्तम्

## अध्ययनं – १२ – उदकज्ञातः

**वृ.** अधुना द्वादशं विव्रियते, अस्य चैवं सम्बन्धः—अनन्तरज्ञाते चारित्रधर्म्मस्य विराधक-धर्म्मस्य विराधकत्वमाराधकत्वं चोक्तमिह तु चारित्राराधकत्वं प्रकृतिमलीमसानामपि भव्यानां सद्गुरुपरिकर्म्मणातो भवतीत्युदकोदाहरणेनाभिधीयते, इत्येवं सम्बद्धमिदम्—

**मू. (१४३)** *जति णं भंते ! समणेणं जाव संपत्तेणं एक्कारसमस्स नायज्झयणस्स अयम० बारसमस्स णं नायज्झयणस्स के अट्ठे पं० ?, एवं खलु जंबू ! तेणं कालेणं २ चंपा नाम नयरी पुन्नभद्दे जितसत्तू राया धारिणी देवी, अदीनसत्तू नामं कुमारे जुवराया यावि होत्था, सुबुद्धी अमच्चे जाव रज्जधुराचिंतए समणोवासए,*

*तीसे णं चंपाए नयरीए बहिया उत्तरपुरच्छिमेणं एगे परिहोदए यावि होत्था, मेयवसामंस-रुहिरपूयपडलपोच्चडे मयगकलेवरसंछण्णे अमणुण्णे वण्णेणं जाव फासेणं,*

*से जहा नामए अहिमडेति वा गोमडेति वा जाव मयकुहियविणट्ठकिमिणवाण्णदुरभिगंधे किमिजालाउले संसत्ते असुइविगयबीभत्थदरिसणिज्जे, भवेयारुवे सिया ?, नो इणट्ठे समट्ठे, एत्तो अनिट्ठतराए चेव जाव गंधेणं पन्नत्ते ।*

**वृ.** सर्वं सुगमं नवरं 'फरिहोदए'त्ति परिखायाः—खातवलयस्योदकं परिखोदकं, चापीति समुच्चये, ततश्चंपादिकोऽर्थोऽभूद् एवं परिखोदकं चाभूदित्येवं, चः समुच्चये इति, 'मेये'त्यादि, अत्र मेदःप्रभृतीनां पटलेन—समूहेन 'पोच्चडं' विलीनं मृतकानां यथा वा द्विपदादीनां कडेवरैः संछन्नं यत्तत्तथा, अह्यादिकडेवरविशेषणायाह—मृतं—जीवविमुक्तमत्रं सद्यत् कुथितं—ईषद्दुर्गन्धमि-त्यर्थः तथा विनष्टं-उच्छूनत्वादिविकारवत् 'किमिणं'ति कतिपयकृमिवत् व्यापन्नं च—शकुन्या-दिभक्षणाद्बीभत्सतां गतं सद्यदुरभिगन्धं—तीव्रतरदुष्टगन्धं ।

**मू. (१४४)** *तते णं से जितसत्तू राया अन्नदा कदाइ ण्हाए कयबलिकम्मे जाव अप्पम-हग्घाभरणालंकियसरीरे बहूहिं राईसर जाव सत्थवाहपभितिहिं सद्धिं भोयणवेलाए सुहासणवरगए विपुलं असनं ४ जाव विहरति, जिमितभुत्तुत्तरायए जाव सुइभूते तंसि विपुलंसि असन ४ जाव जायविम्हए ते बहवे ईसर जाव पभितीए एवं वयासी—अहो णं देवा० ! इमे मणुन्ने असन ४*

वण्णेणं उववेए जाव फासेणं उववेते अस्सायणिज्जे विस्सायणिज्जे पीणणिज्जे दीवणिज्जे दप्पणिज्जे मयणिज्जे बिंहणिज्जे सव्विंदियगायपल्हायणिज्जे,

तते णं ते बहवे ईसर जाव पभियओ जितसत्तुं एवं व०–तहेव णं सामी ! जण्णं तुब्भे वदह अहो णं इमे मणुण्णे असनं ४ वण्णेणं उववेए जाव पल्हायणिज्जे, तते णं जितसत्तू सुबुद्धिं अमच्चं एवं व०–अहो णं सुबुद्धी ! इमे मणुण्णे असनं ४ जाव पल्हायणिज्जे, तए णं सुबुद्धि जितसत्तुस्सेयमट्ठं नो आढाइ जाव तुसिणीए संचिट्ठति, तते णं जितसत्तुणा सुबुद्धी दोच्चंपि तच्चंपि एवं वुत्ते समाणे जितसत्तुं रायं एवं वदासी–नो खलु सामी ! अहं एयंसि मणुण्णंसि असन ४ केइ विम्हए, एवं खलु सामी ' सुब्भिसद्दावि पुग्गला दुब्भिसद्दत्ताए परिणमंति दुब्भिसद्दावि पोग्गला सुब्भिसद्दत्ताए परिणमंति, सुरूवावि पोग्गला दुरूवत्ताए परिणमंति दुरूवावि पोग्गला सुरूवत्ताए परिणमंति, सुब्भिगंधावि पोग्गला दुब्भिगंधत्ताए परिणमंति दुब्भिगंधावि पोग्गलासुब्भिगंधत्ताए परिणमंति सुरसावि पोग्गला दुरसत्ताए परिणमंति दुरसावि पोग्गला सुरसत्ताए परिणमंति सुहफासावि पोग्गला दुहफासत्ताए परिणमंति दुहफासावि पोग्गला सुहफासत्ताए परिणमंति पओगवीससापरिणयावि य णं सामी ! पोग्गला पन्नता,

तते णं से जितसत्तू सुबुद्धिस्स अमच्चस्स एवमातिक्खमाणस्स ४ एयमट्ठं नो आढाति नो परियाणाई तुसिणीए संचिट्ठइ, तए णं से जितसत्तू अन्नदा कदाई ण्हाए आसखंधवरगते महया भडचडगरहआसवाहणियाए निज्जायमाणे तस्स फरिहोदगस्स अदूरसामंतेणं वीतीवयइ ।

तते णं जितसत्तू तस्स फरिदोदगस्स असुभेणं गंधेणं अभिभूते समाणे सएणं उत्तरिज्जगेणं आसगं पिहेइ, एगंतं अवक्कमति, ते बहवे ईसर जाव पभितिओ एवं वदासी–अहो णं देवाणुप्पिया इमे फरिहोदए ! अमणुन्ने वण्णेणं ४ से जहा नामए अहिमडेति वा जाव अमणामतराए चेव, तए णं ते बहवे राईसरपभिइ जाव एवं व०–तहेव णं तं सामी ! जंणं तुब्भे एवं वयह, अहो णं इमे फरिहोदए अमणुण्णे वण्णेणं ४ से जहा नामए अहिमडे इ वा जाव अमनामतराए चेव,

तए णं से जियसत्तू सुबुद्धिं अमच्चं एवं वदासी–अहो णं सुबुद्धी ! इमे फरिहोदए अमणुण्णे वण्णेणं से जहा नामए अहिमडेइ वा जाव अमणामतराए चेव, तए णं सुबुद्धी अमच्चे जाव तुसिणीए संचिट्ठइ, तए णं से जियसत्तू राया सुबुद्धिं अमच्चं दोच्चंपि तच्चंपि एवं व०–अहो णं तं चेव, तए णं से सुबुदद्धी अमच्चे जियसत्तुणा रन्ना दोच्चंपि तच्चंपि एवं वुत्ते समाणे एवं व०–नो खलु सामी ! अम्हं एयंसि करिहोदगंसि केइ विम्हए, एवं खलु सामी ! सुब्भिसद्दावि पोग्गला दुब्भिसद्दत्ताए परिणमंति, तं चेव जाव पओगवीससापरिणयावि य णं सामी ! पोग्गला पन्नता,

तते णं जितसत्तु सुबुद्धि एवं चेव, मा णं तुमं देवाणु० ! अप्पाणं च परं च तदुभयं वा बहूहि य असब्भावुब्भावणाहिं मिच्छताभिनिवेसेण य वुग्गाहेमाणे वुप्पाएमाणे विहराहि, तते णं सुबुद्धिस्स इमेयारूवे अब्भत्थिए ५ समुप्पज्जित्था–अहो णं जितसत्तू संते तच्चे तहिए अवितहे सब्भूते जिणपन्नत्ते भावे नो उवलभति, तं सेयं खलु मम जितसत्तुस्स रन्नो संताणं तच्चाणं तहियाणं अवितहाणं सब्भूताणं जिनपन्नत्ताणं भावाणं अभिगमणट्ठयाए एयमट्ठं उवाइणावेत्तए,

एवं संपेहेति २ पच्चतिएहिं पुरिसेहिं सद्धिं अंतरावणाओ नवए घडयपडए पगेण्हति २ संझाकालसमयंसि पविरलमणुस्संसि निसंतपडिनिसंतंसि जेणेव फरिहोदए तेणेव उवागए २ तं

फरिहोदगं गेण्हावेति २ नवएसु घएडसु गालावेति २ नवएसु घडएसु पक्खिवावेति २ लंछियमुद्दिते करावेति २ सत्तरत्तं परिवसावेति २ दोच्चंपि नवएसु घडएसु गालावेति नवएसु घडएसु पक्खिवावेति २ सज्जक्खारं पक्खिवावेइ लंछियमुद्दिते कारवेति २ सत्तरत्तं परिवसावेति २ तच्चंपि नवएसु घडएसु जाव संवसावेति एवं खलु एएणं उवाएणं अंतरा गलावेमाणे अंतरा पक्खिवावेमाणे अंतराय विपरिवसावेमाणे २ सत्त २ रातिंदिया विपरिवसावेति, तते णं से फरिहोदए सत्तमसत्तयंसि परि- णममाणंसि उदगरयणे जाए यावि होत्था अचअच्छे पत्ते जच्चे तणुए फलिहवण्णाभे वण्णेणं उववेते ४ आसायणिज्जे जाव सव्विंदियगायपल्हायणिज्जे,

तते णं सुबुद्धी अमच्चे जेणेव से उदगरयणे तेणेव उवा० २ करयलंसि आसादेति २ तं उदगरयणं वण्णेणं उववेयं ४ आसायणिज्जे जाव सव्विंदियगायपल्हयणिइज्जं जाणित्ता हट्ठतुट्ठे बहूहिं उदगसंभारणिज्जेहिं संभारेति २ जितसत्तुस्स रण्णो पाणियधरियं सद्दावेति २ एवं व०–तुमं च णं देवाणुप्पिया ! इमं उदगरयणं गेण्हाहि २ जितसत्तुस्स रन्नो भोयणवेलाए उवणेज्जासि, तते णं से पाणियघरिए सुबुद्धियस्स एतमट्ठं पडिसुणेति २ तं उदगरयणं गिण्हाति २ जितसत्तुस्स रन्नो भोयणवेलाए उवट्ठवेति,

तते णं से जितसत्तू राया तं विपुलं असनं ४ आसाएमाणे जाव विहरइ, जिमियभुत्तु- त्तरायया वि य णं जाव परमसुइभूए तंसि उदगरयणे जायविम्हए ते बहवे राईसर जाव एवं व०–अहो णं देवाणु० ! इमे उदगरयणे अच्छे जाव सव्विंदियगायपल्हायणिज्जे तते णं बहवे राईसर जाव एवं व०–तहेव णं सामी ! जण्णं तुब्भे वदह जाव एवं चेव पल्हायणिज्जे, तते णं जितसत्तू राया पाणियधरियं सद्दावेति २ एवं व०–एस णं तुब्भे देवा० ! उदगरयणे कओ आसादिते ?,

तते णं से पाणियधरिए जितसत्तुं एवं वदासी–एस णं सामी ! मए उदगरयणे सुबुद्धिस्स अंतियाओ आसादिते, तते णं जितसत्तू सुबुद्धिं अमच्चं सद्दावेति २ एवं व०–अहो णं सुबुद्धी केणं कारणेणं अहं तव अनिट्ठे ५ जेणं तुमं मम कल्लाकल्लिं भोयणवेलाए इमं उदगरयणं न उवट्ठवेसि ?, तए णं तुमे देवा० ! उदगरयणे कओ उवलद्धे ?, तते णं सुबुद्धी जितसत्तुं एवं व०–एस णं सामी ! से फरिहोदए, तते णं से जितसत्तू सुबुद्धिं एवं व०–केणं कारणेणं सुबुद्धि ! एस से फरिहोदए ?, तते णं सुबुद्धी जितसकत्तुं एवं व०–एवं खलु सामी ! तुम्हे तया मम एवमातिक्ख- माणस्स ४ एतमट्ठं नो सद्दहह तते णं मम इमेयारूवे अब्भत्थिते ६ अहो णं जितसत्तू संते जाव भावे नो सद्दहति नो पत्तियति नो रोएति तं सेयं खलु ममं जियसत्तुस्स रन्नो संताणं जाव सब्भूताणं जिनपन्नत्ताणं भावाणं अभिगमणट्ठयाए एतमट्ठं उवाइणावेत्तए, एवं संपेहेमि २ तं चेव जाव पाणियधरियं सद्दावेमि २ एवं वदामि–तुमं णं देवाणु० ! उदगरतणं जितसत्तुस्स रन्नो भोयणवेलाए उवणेहि, तं एएणं कारणेणं सामी ! एस से फरिहोदए ।

तते णं जितसत्तू राया सुबुद्धिस्स अमच्चस्स एवमातिक्खमाणस्स ४ एतमट्ठं नो सद्दहति ३ असद्दहमाणे ३ अब्भितरट्ठाणिज्जे पुरिसे सद्दावेति २ एवं वदासी–गच्छह णं तुब्भे देवाणुप्पिया ! अंतरावणाओ नवघडए पडए य गेण्हह जाव उदगसंहारणिज्जेहिं दव्वेहिं संभारेह तेऽवि तहेव संभारेंति २ जितसत्तुस्स उवणेंति, तते णं जितसत्तू राया तं उदगरयणं करयलंसि आसाएति आसातणिज्जं जाव सव्विंदियगायपल्हायणिज्जं जाणित्ता सुबुद्धिं अमच्चं सद्दावेति २ एवं व०–सुबुद्धी

*एए णं तुमे संता तथा जाव सब्भूया भावा कतो उवलद्धा ?,*

*तते णं सुबुद्धी जितसत्तु एवं वदासी—एए णं सामी ! मए संता जाव भावा जिणवयणातो उवलद्धा, तते णं जितसत्तू सुबुद्धिं एवं व०—तं इच्छामि णं देवाणु० ! तव अंतिए जिनवयणं निसामेत्तए, तते णं सुबुद्धी जितसत्तुस्स विचित्तं केवलिपन्नत्तं चाउज्जामं धम्मं परिकहेइ, तमाइक्खति जहा जीवा बज्झंति जाव पंच अणुव्वयाति, तते णं जितसत्तू सुबुद्धिस्स अंतिए धम्मं सोच्चा निसम्म हट्ठ० सुबुद्धिं अमच्चं एवं व०— सद्दहामि णं देवाणुप्पिया ! निग्गंथं पावयणं ३ जाव से जहेयं तुब्भे वयह, तं इच्छामि णं तव अंतिए पंचाणुव्वइयं सत्तसिक्खावइयं जाव उवसंपज्जित्ताणं विहरित्तए, अहासुहं देवा० ! मा पडिबंधं०, तए णं से जियसत्तू सुबुद्धिस्स अमच्चस्स अंतिए पंचाणुव्वइयं जाव दुवालसविहं सावयधम्मं पडिवज्जइ,*

*तते णं जितसत्तू समणोवासए अभिगयजीवाजीवे जाव पडिलाभेमाणे विहरति । तेणं कलेणं २ थेरागमणं जियसत्तू राया सुबुद्धी य निग्गच्छति, सुबुद्धी धम्मं सोच्चा जं नवरं जियसत्तुं आपुच्छामि जाव पव्वयामि, अहासुहं देवा० !, तते णं सुबुद्धी जेणेव जितसत्तू तेणेव उवा० २ एवं व०—एवं खलु सामी ! मए थेराणं अंतिए धम्मे निसन्ते सेऽविय धम्मे इच्छियपडिच्छिए ३, तए णं अहं सामी ! संसारभउव्विग्गे भीए जाव इच्छामिणं तुब्भेहिं अब्भणुन्नाए स० जाव पव्वइत्तए,*

*तते णं जितसत्तू सुबुद्धिं एवं व०—अच्छासु ताव देवाणु० ! कतिवयातिं वासाइं उरालातिं जाव भुंजमाणा ततो पच्छा एगयओ थेराणं अंतिए मुंडे भवित्ता जाव पव्वइस्सामो, तते णं सुबुद्धी जितसत्तुस्स एयमट्ठं पडिसुणेति, तते णं तस्स जितसत्तुस्स सुबुद्धीणा सद्धिं विपुलाइं माणुस्स० पच्चणुब्भवमाणस्स दुवालस वासाइं वीतिक्कंताइं तेणं कालेणं २ थेरागमणं तते णं जितसत्तू धम्मं सोच्चा एवं जं नवरं देवा० ! सुबुद्धिं आमंतेमि जेट्ठपुत्तं रज्जे ठवेमि, तए णं तुब्भं जाव पव्वयामि, अहासुहं, तते णं जितसत्तू जेणेव सए गिहे तेणेव उवा० २ सुबुद्धिं सद्दावेति २ एवं वयासी—*

*एवं खलु मए थेराणं जाव पव्वज्जामि, तुमं णं किं करेसि ?, तते णं सुबुद्धी जितसत्तुं एवं व०—जाव के० अन्ने आहारे वा जाव पव्वयामि, तं जति णं देवा० जाव पव्वयह गच्छह णं देवाणु० ! जेट्ठ- पुत्तं च कुडुंबे ठावेहि २ सीयं दुरुहित्ताणं ममं अंतिए सीया जाल पाउब्भवेति, तते णं सुबुद्धीए सीया जाव पाउब्भवइ, तते णं जितसत्तू कोडुंबियपुरिसे सद्दावेति २ एवं व०—गच्छह णं तुब्भे देवा० ! अदीनसत्तुस्स कुमारस्स रायाभिसेयं उवट्ठवेह जाव अभिसिंचंति जाव पव्वतिए । तते णं जितसत्तू एक्कारस अंगाइं अहिज्जति बहूणि वासाणि परियाओ मासियाए सिद्धे, तते णं सुबुद्धी एक्कारस अंगाइं अ० बहूणि वासाणि जाव सिद्धे । एवं खलु जंबू ! समणेणं भगवया महावीरेणं बारसमस्स अयमट्ठे पन्नत्तेत्तिबेमि ॥*

**वृ.** तत्तथा 'सुब्भिसद्दावि'त्ति शुभशब्दा अपि, 'दुब्भिसद्दत्ताए'त्ति दुष्टशब्दतया, 'पओगवीससापरिणय'त्ति प्रयोगेण—जीवव्यापारेण विश्रसया च—स्वभावेन परिणताः—अवस्थान्तरमापन्ना ये ते तथा 'आसखंधवरगए'त्ति अश्व एव स्कन्धः—पुद्गलप्रतचयरूपो वरः—प्रधानोऽश्वरोऽथवा स्कन्धप्रदेशप्रत्यासत्तेः पृष्ठमपि स्कन्ध इति व्यपदिष्टमिति, 'असब्भावुब्भावणाहिं'ति असतां भावानां—वस्तूनां—वस्तुधर्माणां वा या उद्भावना—उत्क्षेपणानि तास्तथा ताभिर्मिथ्यात्वाभिनिवेशेन च—विपर्यासाभिमानेन व्युद्ग्राहयन्—विविधत्वेनाधिक्येन च ग्राहयन् व्युत्पा-

दयन्–अव्युत्पन्नमतिं व्युत्पन्नं कुर्वन् 'संते' इत्यादि सतो–विद्यमानान् 'तच्चे' ति तत्त्वरूपानैदंपर्यसमन्वितानित्यर्थः, अत एव तथ्यान्–सत्यान्, एतदेव व्यतिरेकेणोच्यते–अवितथान् न वितथानित्यर्थः, किमुक्तं भवति ? – सद्भूतान् सता प्रकारेण भूतान्–जातान् सद्भूतान् एकार्था वैते शब्दाः, 'अभिगमणट्ठयाए' अवगमलक्षणाय अर्थायेत्यर्थः, 'एतमट्ठं' ति एव–पुद्गलानामपरापरपरिणामलक्षणमर्थं 'उवाइ- णावित्तए' ति उपादापयितुं ग्राहयितुमित्यर्थः,

'अंतरावणाउ' त्ति परिखोदकमार्गान्तरालवर्त्तिनो हट्टात् कुम्भकारसम्बन्धिन इत्यर्थः, 'सज्जखारं' ति सद्यो भस्म, 'अच्छे' त्यादि, अच्छं–निर्मल, पथ्यं–आरोग्यकरं जात्यं–प्रधानमिति भावः, तुनकं–लघु सुजरमिति ह्रदयं, 'उदगसंभारणिज्जेहिं' ति उदकवासकैः–वालकमुस्तादिभिः संभारयति–संभृतं करोति । इहाध्ययने यद्यपि सूत्रेणोपनयो न दर्शितःतथाऽप्येवं द्रष्टव्यः–

॥ १ ॥ "मिच्छत्तमोहियमणा पावपसत्तावि पाणिणो वगुणा ।
फरिहोदगंव गुणिणो हवंति वरगुरुपसायाओ ॥" त्ति

श्रुतस्कन्धः– १ अध्ययनं – १२ – समाप्तम्

## अध्ययनं – १३ – दर्दुरकः

वृ. अथ त्रयोदशं व्याख्यायते, अस्य च पूर्वेण सहायं सम्बन्धः–अनन्तराध्ययने संसर्गविशेषाद् गुणोत्कर्ष उक्तः, इह तु संसर्गविशेषाभावाद् गुणापकर्ष उच्यते, इत्येवं सम्बद्धमिदम्–

**मू. (१४५)** *जति णं भंते ! समणेणं० बारसमस्स अयमट्ठे पन्नत्ते तेरसमस्स णं भंते ! नाय० के० अट्ठे पन्नत्ते ?, एवं खलु जंबू ! तेणं कालेणं २ रायगिहे गुणसिलए चेतिए, समोसरणं, परिसा निग्गया, तेणं कालेणं २ सोहम्मे कप्पे दद्दुरवडिंसए विमाणे सभाए सुहम्माए दद्दुरंसि सीहासणंसि दद्दुरे देवे चउहिं सामाणियसाहस्सीहिं चउहिं अग्गमहिसीहिं सपरिसाहिं एवं जहा सुरियाभो जाव दिव्वाति भोगभोगाइं भुंजमाणो विहरइ,*

*इमं च णं केवलकप्पं जंबुद्दीवं २ विपुलेणं ओहिणा आभोएमाणे २ जाव नट्टविहिं उवदंसित्ता पडिगते जहा सुरियाभे । भंतेति भगवं गोयमे समणं भगवं महावीरं वंदइ नमंसति २ एवं व०–अहो णं भंते ! दद्दुरे देवे महिड्ढिए २ दद्दुरस्स णं भंते ! देवस्स सा दिव्वा देविड्ढी ३ कहिं गया० ? गो० सरीरं गया सरीरं अणुपविट्ठा कूडागारदिट्ठंतो, दद्दुरेणं भंते ! देवेणं सा दिव्वा देविड्ढी ३ किण्णा लद्धा जाव अभिसमन्नागया ?, एवं खलु गो० ! इहेव जंबुद्दीवे २ भारहे वासे रायगिहे गुणसिलए चेतिए सेणिए राया,*

*तत्थ णं रायगिहे नंदे नामं मणियारसेट्ठी अड्ढे दित्ते, तेणं कालेणं २ अहं गोयमा ! समोसढे परिसा निग्गया, सेणिए राया निग्गए, तते णं से नंदे मणियारसेट्ठी इमीसे कहाए लद्धट्ठे समाणे ण्हाए पायचारेणं जाव पज्जुवासति, नंदे धम्मं सोच्चा समणोवासए जाते, तते णं अहं रायगिहाओ पडिनिक्खन्ते बहिया जणवयविहारं विहरामि,*

*तते णं से नंदे मणियारसेट्ठी अन्नया कदाइ असाहुदंसणेण य अपज्जुवासणाए य अननुसासणाए य असुस्सूसणाए य सम्मत्तपज्जवेहिं परिहायमाणेहिं २ मिच्छत्तपज्जवेहिं परिवड्ढमाणेहिं २ मिच्छत्तं विप्पडिवन्ने जाए यावि होत्था, तते णं नंदे मणियारसेट्ठी अन्नता*

गिम्हकालसमयंसि जेट्ठमूलंसि मासंसि अट्ठमभत्तं परिगेण्हति २ पोसहसालाए जाव विहरति,

ततेणं नंदस्स अट्ठमभत्तंसि परिणममाणंसि तण्हाए छुहाए य अभिभूतस्स समाणस्स इमेयारूवे अब्भत्थिते ५-धन्ना णं ते जाव ईसरपभितओ जेसिं णं रायगिहस्स बहिया बहूओ वावीतो पोक्खरणीओ जाव सरसरपंतियाओ जत्त णं बहुजणो ण्हाति य पियति य पाणियं च संवहति, तं सेयं खलु ममं कल्लं पाउ० सेणियं आपुच्छित्ता रायगिहस्स बहिया उत्तरपुरच्छिमे दिसिभाए वेभारपव्वयस्स अदूरसामंते वत्थुपाढगरोइतंसि भूमिभागंसि जाव नंदं पोक्खरणिं खणावेत्तएत्तिकट्टु एवं संपेहेति २ कल्लं पा० जाव पोसहं पारेति २ ण्हाते कयबलिकम्मे मित्तनाइ जाव संपरिवुडे महत्थं जाव पाहुडं रायारिहं गेण्हति २ जेणेव सेणिए राया तेणेव उवा० २ जाव पाहुडं उवट्ठवेति २ एवं व०-इच्छामि णं सामी ! तुब्भेहिं अब्भणुन्नाए समाणे रायगिहस्स बहिया जाव खणावेत्तए, अहासुहं देवाणुप्पिया !

ततेणं नंदे सेणिएणं रन्ना अब्भणुण्णाते समाणे हट्ठ० रायगिहं मज्झंमज्झेणं निग्गच्छति २ वत्थुपाढयरोइयंसि भूमिभागंसि नंदं पोक्खरणिं खणाविउं पयत्ते यावि होत्था, तते णं सा नंदा पोक्खरणी अणुपुव्वेणं खणमाणा २ पोक्खरणी जाया यावि होत्था चाउक्कोणा समतीरा अणुपुव्वसुजायवप्पसीयलजला संछण्णपत्तबिसमुणाला बहुप्पलपउमकुमुदनलिणसुभग-सोगंधियपुंडरीयमहापुंडरीयसयपत्तसहस्सपत्तपफुल्लकेसरोववेया परिहत्थभमंतमच्छछप्पय-अनेगसउणगणमिहुणवियरियसद्दुन्नइयमहुरसरनाइया पासाईया ४।

ततेणं से नंदे मणियारसेट्ठी नंदाए पोक्खरणीए चउद्दिसिं चत्तारि वनसंडे रोवावेति। तए णं ते वनसंडा अणुपुव्वेणं सारक्खिज्जमाणा संगोविज्जमाणा य संवड्ढियमाणा य से वनसंडा जाया किण्हा जाव निकुरुंबभूया पत्तिया पुप्फिया जाव उवसोभेमाणा २ चिट्ठंति।

ततेणं नंदे पुरच्छिमिल्ले वनसंडे एगं महं चित्तसभं करावेति अणेगखंभसयसंनिविट्ठं पा०, तत्थ णं बहूणि किण्हाणि य जाव सुक्किलाणि य कट्ठकम्माणि य पोत्थकम्माणि चित्त० लिप्प० गंथिमवेढिमपूरिमसंघातिम० उवदंसिज्जमाणइं २ चिट्ठंति, तत्थ णं बहूणि आसणाणि य सयणाणि य अत्थुयपच्चत्थुयाइं चिट्ठंति, तत्थ णं बहवे नडा य नट्टा य जाय दिन्नभइभत्तवेयणा तालायरकम्मं करेमाणा विहरंति, रायगिहविणिग्गओ य जत्थ बहू जणो तेसु पुव्वन्नत्थेसु आसणसयणेसु संनिसन्नो य संतुयट्टो य सुणमाणो य पेच्छमाणो य सोहेमाणो य सुहंसुहेणं विहरइ, तते णं नंदे दाहिणिल्ले वनसंडे एगं महं महाणससालं करावेति अणेगखंभ० जाव रूवं तत्थ णं बहवे पुरिसा दिन्नभइभत्तवेयणा विपुलं असनं ४ उवक्खडेंति बहूणं समणमाहणअतिहीकिवणवणीमगाणं परिभाएमाणा २ विहरंति,

ततेणं नंदे मणियारसेट्ठी पच्चत्थिमिल्ले वनसंडे एगं महं तेगिच्छियसालं करेति, अनेग-खंभसय० जाव रूवं, तत्थ णं बहवे वेज्जा य वेज्जपुत्ता य जाणुया य जाणुयपुत्ता य कुसला य कुसलपुत्ता य दिन्नभइभत्तवेयणा बहूणं वाहियाणं गिलाणाण य रोगियाण य दुब्बलाण य तेइच्छं करेमाणा विहरंति, अन्ने य एत्थ बहवे पुरिसा दिन्न तेसिं बहूणं विहायाण य रोगि० गिला० दुब्बला० ओसहभेसज्जभत्तपाणेणं पडियारकम्मं करेमाणा विहरंति,

ततेणं नंदे उत्तरिल्ले वनसंडे एगं महं अलंकारियसभं करेति, अनेगखंभसत-जाव पडिरूवं,

